श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

तत्त्वचिन्तामणौ-

# पञ्चलक्षणी ।

## *व्याप्तिग्रहोपायश्च वक्ष्यते ।

[ दीधितिः । ]

सर्वमिदं सति व्याप्तिनिश्चये स्यात्, सएव न सम्भवति, उपाया भावादित्यतआह- व्याप्ती ति ।

[ गदाधरीयम् । ]

**सर्वमिदम्** – अनुमानप्रामाण्यव्यवस्थापकयुक्तिप्रदर्शनम् । **व्याप्ति निश्चये सती त्यन्वय । सएव-** व्याप्तिनिश्चय एव । **न सम्भवति**— नोत्पत्तुमर्हति । **उपायाभावात्**— निश्चायकाभावात् । अनुमानप्रामाण्योप पादकतया व्याप्तिग्रहोपायस्यैवेदानीमभिधातुमुचितत्वात् वक्ष्यत इत्यनेन

* प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तर बहुवादिसम्मतत्वादुपमानात् प्रागनु मान निरूप्यते । तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्य ज्ञानमनुमिति , तत्करणमनु मानम्, तच्च लिङ्गपरामर्शो न तु परामृश्यमान लिङ्गमिति वक्ष्यते ।

*अथानुमान न प्रमाणम् ,योग्योपाधीना योग्यानुपलब्ध्याऽभावनिश्चयेऽप्ययो* ग्योपाधिशङ्कया व्यभिचारसंशयात्, शतशः सहचरितयोरपि व्यभिचारोपलब्धेश्च , लोके धूमादिदर्शनानन्तर वह्न्यादिव्यवहारश्च सम्भावनामात्रात्, सवादेन च प्रामाण्याभिमानादिति नाप्रत्यक्ष प्रमाणमिति न, अप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्टसाधर्म्यस्यानुमानत्वात्, एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतर प्रत्यर्थवत्त्वात्,तयो श्च परकीययोरप्रत्यक्षत्वात् , अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययो र्व्याघाताच्च । अपिचानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणत्वापत्ते ,प्रामाण्यस्यानुमेय- त्वात् । स्वतश्च प्रामाण्यग्रहे तत्संशयानुपपत्ते ।[इत्येताः पङ्क्तयोऽप्यत्रानुसन्धेया ।]

# नन्वनुमितिहेतुभूतव्याप्तिज्ञाने काव्याप्तिः?

[दी] समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रति पादननिदानं व्याप्तिस्वरूपं निरूपणमारभते- नन्वित्यादिना।

तत्प्रतीक्षा विधाय, व्याप्तिस्वरूपनिरूपणमयुक्तमित्याशङ्का परिजिहीर्षु स्तत्प्राथम्ये तस्य व्याप्तिग्रहोपायप्रतिपादनोपयिकत्वरूपं बीजं दर्शयन् नन्वित्यादिग्रन्थमवतारयति- समारब्धेति। व्याप्तिग्रहोपायाकथनेन प्रामाण्य व्यवस्थापनस्यानिष्पन्नत्वात् समारब्धे ति परीक्षाविशेषणम् । परीक्षा च परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम् । कारणीभूते ति प्रतिपादन विशेषणम् । यद्यपि व्याप्तिग्रहोपायप्रतिपादनस्यानुमानप्रामाण्यव्यवस्थापकत्व कथनं न तस्यावश्यकत्वप्रदर्शनाय, व्याप्तिग्रहोपायश्च वक्ष्यत इत्येत- द्ग्रन्थावतारणाद्व्याप्तिग्रहोपायस्यानुमानप्रामाण्योपपादकतालाभेनैव तल्लाभात्; तथापि प्रामाण्यव्यवस्थापननिर्वाहकतया भवतु व्याप्तिग्रहोपायप्रतिपादन स्येदानीमाकाङ्क्षितत्वम् , एवमपि तत्र व्याप्तिस्वरूपनिरूपणं विना सम्भ वतीति प्रथमतस्तदेवोचितमित्येतत्सूचनायैतदभिहितम् । निदान मिति । व्याप्तिनटकीभूताव्यभिचारग्रहाभावे बाधाभावमुद्रया व्यभिचारज्ञानाभावो हेतु , साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकाग्रहे विशेषणज्ञानमुद्रया सहचारग्रहोहेतुरिति क्रमेण व्याप्तिग्रहोपायप्रतिपादनस्य व्याप्तिस्वरूप मप्रतिपाद्याशक्यत्वादिति भाव । प्रथमत पूर्वपक्षस्यैवाभिधानेन निरूप यतीत्यसङ्गतम् , अत आरभत इत्युक्तम् । निरूपणस्य परमतनिराकरण पूर्वकसिद्धान्तकथनरूपतया पूर्वपक्षाभिधान तत्खण्डनयोरपि तदारम्भण रूपतेति ध्येयम् ।

## नतावदव्यभिचारितत्वम्, तद्धि न साध्याभावववद्वृत्तित्वम्,

मूले न तावदव्यभिचरितत्व मिति । व्याप्ति रिति प्रश्नस्थ मनुषज्यते । तथाचाव्यभिचारपदार्थो नानुमितिजनकज्ञानविषय इत्यर्थ । अनुमितिजनकत्व नाव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्न मिति पर्यवसितम् । अत्र हेतुमाह— तद्धि न साध्याभाववद्वृत्तित्व मित्यादि । हि यत । साध्याभाववदवृत्तित्वादिरूपम्, तत् अव्यभिचरित त्वम् । न व्याप्ति रित्यनुषङ्गेणान्वय । तथाच साध्याभाववदवृत्तित्वादि रूपा ये अव्यभिचारपदार्था तदवच्छिन्नहेतुविषयताघटितधर्मावच्छिन्न त्वाभावकूटवत्त्वादिति निरुक्तपर्यवसितसामान्याभावसाधक फलितो हेतु । नचाप्रयोजकत्वम्, विशेषाभावकूटस्य सामान्याभावव्याप्यताया अवि वादात् । तत्र साध्याभाववदवृत्तित्वादिरूपा ये पञ्चाव्यभिचारपदार्था तदवच्छिन्नविषयताघटितधर्मावच्छिन्नत्वाभावस्य प्रत्येकसाधक हेतु व- क्ष्यति— **केवलान्वयिन्यभावा** दिति । साध्ये अत्यन्ताभावाप्रतियोगित्वा न्योन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वग्रहदशाया मत्यन्ता न्योन्याभावयो साध्यतद्वत्त्वानवच्छिन्नप्रतियोगिताकत्वभ्रमासम्भवेन प्रति योगितया साध्यतदाश्रयविशेषितात्यन्तान्योन्याभाववदवृत्तित्वावच्छिन्नविष यतायास्तादृशविशेषदर्श्यनुमितिजनकज्ञाने अभावादित्यर्थ । एवञ्च तादृशविषयताशून्यवृत्तित्वमेव अनुमितिजनकतायां दर्शितसाध्यसाधक्ो हेतुरभिमत इति नासिद्धयादि । ईदृशादिशा अग्रिमहेतवोऽपि परि ष्करणीया ।

# साध्यवद्भिन्न साध्याभाववदवृत्तित्वम्,

[दी] अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह— साध्यव द्भिन्ने ति । साध्यवद्भिन्ने य स्साध्याभाव स्तद्वदवृत्तित्वमर्थ ।

दीधिते अव्याप्ये ति । कपिसंयोगी एतद्वृक्षत्वादित्यादावित्यर्थ । अव्याप्ति मिति । तत्र हेत्वधिकरणे एतद्वृक्षादावन्यदेशकालावच्छेदेन कपिसंयोगाद्यभावसत्त्वादिति भाव । साध्यवद्भिन्नो यस्साध्याभाववानिति कर्मधारये अभेदसम्बन्धेन साध्यवद्भिन्नीय यत्साध्याभावाधिकरण तद वृत्तित्वमर्थस्स्यात् , तथासति तद्घटकीभूतस्याभेदसम्बन्धेन साध्यवद्भिन्नीय यत् तदवृत्तित्वस्यैव लक्षणत्वसम्भवा त्साध्याभाववत्त्वांशस्य वैयर्थ्यापत्तिः, अतस्साध्याभावपदेन साध्यवद्भिन्नपदस्य सप्तमीतत्पुरुष व्याचष्टे साध्य वद्भिन्न इति । तथाच साध्यवद्भिन्नवृत्ति र्यस्साध्याभाव तद्वदवृत्तित्व मर्थ , तत्र पूर्ववदभेदेन साध्यवद्भिन्न पदार्थविशेषित धर्म्यवृत्तित्वादेर्न घटकता, वृत्त्यादिविशेषणतयैव साध्यवद्भिन्नस्य निवेशादिति न साध्याभावांश वैयर्थ्यमिति भाव ।

अभावे साध्यीयत्वानिवेशे ह्रदादिवृत्तिगगनाद्य भाववति पर्वतादौ धूमादेर्वृत्तेरसम्भव इति तद्वारणाय साध्यपदम् । नचाधिकरणभेदेना भावभेदमत एवतल्लक्षणकरणात् पर्वतादेर्न ह्रदादिवृत्त्यभाववत्त्वमिति वाच्यम्, अव्याप्यवृत्तिप्रतियोगिकाभावस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपविरुद्ध धर्माध्यासेन भेदस्य लक्षणकर्तुस्सम्मतत्वादाकाशाभावादेर्भेदकाभावेन त स्यैक्यस्स्यात् । अतएव उक्तधर्माणा भेदकत्व " एतानि च न भेदकानी " त्यनेन दीधितिकृन्निराकरिष्यति । अथवा साध्याभावपदमनुयोगिता विशेषसम्बन्धेन साध्यीयपरम् , अभावीयविलक्षणानुयोगितालाभायैव अभावपदम्, न त्वभावत्वमपि निवेश्यम् , प्रयोजनाभावात्, इत्थ च तादृशविलक्षणसम्बन्धेन यस्साध्यीय तद्वदवृत्तित्वमित्येवार्थ ।

तत्र च साध्यस्य यत्पदार्थविशेषणत्वे ह्रदादिवृत्तिप्रमेयत्वादिमति पर्वतादौ हेतोर्वृत्तेरसम्भवस्स्यादिति तन्निवेशः।

अत्र च साध्याभावस्साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः अन्यथा वह्निमान् धूमादित्यादौ ह्रदादिनिष्ठमहानसीयवह्नित्वावच्छिन्नप्रतियोगिताकवह्न्यभावस्य धूमवति सत्त्वेन, पृथिवीत्वाभावद्रव्यत्वाभावान्यतरवान् जलत्वादित्यादौ साध्यवद्भिन्नपृथिव्यादिनिष्ठद्रव्यत्वाद्यात्मकसाध्यप्रतियोगिकाभावस्य जलादौ सत्त्वेन चाव्याप्त्यापत्तेः। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया, अन्यथा ह्रदादिवृत्तिसमवायादिसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य धूमादिमत्यपि वृत्तेरसम्भवस्य, कालिकसम्बन्धेन द्रव्यत्वाभावादौ साध्ये कालत्वादिहेतौ साध्यवद्भिन्नपरमाणुगगनादिवृत्तिदैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावात्मकद्रव्यत्वादेर्हेत्वधिकरणवृत्तित्वेनाव्याप्तेर्वा प्रसङ्गात्।

अत्र च साध्याभाववत्तायाः सम्बन्धविशेषावच्छिन्नत्वानिवेशे वह्निमान् धूमादित्यादौ ह्रदादिवृत्तिवह्न्याद्यभावस्य कालिकसम्बन्धेन पर्वतादौ वृत्तेरव्याप्तिः दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावादौ दैशिकविशेषणतया साध्ये आत्मत्वादिहेतौ साध्यवद्भिन्नकालादिवृत्तेराकाशाभावात्मकसाध्याभावस्य आत्मादिषु वृत्तेः घटत्वाभावादिसाध्यकसद्धेतौ साध्याभावस्य घटत्वादेर्दैशिकविशेषणतासम्बन्धेन ऽधिकरणतायां मानाभावेन चाव्याप्तिः, अतः साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताज्ञानम्प्रति यादृशसम्बन्धेन स्वप्रकारकनिश्चयः प्रतिबन्धकः तेन सम्बन्धेनाभाववत्त्वं निवेश्यम्, संयोगेन वह्न्यादौ साध्ये तादृशसम्बन्धो दैशिकविशेषणता, कालिकसम्बन्धेनाकाशाभावाभावे दैशिकविशेषणतया साध्ये कालिकसम्बन्ध एव तथा समवायादिना घटत्वादेरभावे दैशिकविशेषणतया साध्ये समवायादिरेवेति न दोषः। नन्वेवं वृक्षनिष्ठो यः कपिसंयोगाभावस्य मूलावच्छिन्नविशेषणता

तादृशसम्बन्धेन वृक्षादौ तादृशाभाववत्ताज्ञानेऽपि कपिसंयोगवत्ताज्ञानोत्पत्ते तादृशसम्बन्धो न लक्षणघटक इति साध्यवद्भिन्नवृत्तित्वविशेषणं व्यर्थमिति वाच्यम्, संयोगतदभावयो रविरुद्धत्वज्ञानाभावदशाया वृक्षः कपिसंयोगाभाववानिति ज्ञानस्यापि वृक्षे कपिसंयोगवत्ताज्ञानविरोधितया वृक्षनिष्ठतदभावीयविशेषणताया अपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूतसंसर्गताश्रयत्वात् ।

केचित्तु — साध्यात्मकाभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षितम्, स च सम्बन्धो यत्सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावः स्वात्मकः स इति नोक्तानुपपत्तिः । अथ समवायेन प्रमेयत्वावच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविशेष्यत्वादिहेतुकस्थले कालिकसम्बन्धस्यापि तत्सम्बन्धावच्छिन्नप्रतियोगिताकघटाभावरूपप्रमेयनिरूपितप्रतियोगितावच्छेदकत्वात् तेन सम्बन्धेन साध्याभाववति काले हेतोर्वृत्तेरव्याप्तिः, नच साध्यनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धनिवेशान्नायं दोषः, कालिकसम्बन्धावच्छिन्नघटाभावादिरूपप्रमेयस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताया घटादावेव सत्त्वात्कालिकसम्बन्धस्य समवायसम्बन्धावच्छिन्न प्रमेयाभावात्मकस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धत्वविरहादिति वाच्यम्, — तादृशप्रमेयाभावस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताको यो ऽभावः तस्यापि प्रमेयत्वेन साध्यतया तन्निरूपिततादृशप्रमेयाभावरूपस्वनिष्ठप्रतियोगितावच्छेदकत्वस्य कालिकसम्बन्धे अक्षततया अव्याप्तेर्दुर्वारत्वात्, नच यावत्साध्यनिरूपितप्रतियोगिता निवेशनीया, तथाचोपदर्शिताभावात्मकयत्किञ्चित्प्रमेयनिरूपितस्वनिष्ठप्रतियोगितावच्छेदककालिकसम्बन्धमादाय न दोष इति वाच्यम्, असम्भवेन प्रमेयस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावो ऽत्र नास्तीति प्रत्ययाविषयतया तादृशप्रमेयाभावाभावत्वे मानाभावात् तादृशप्रमेयाभावनिष्ठयावत्प्रमेयनिरूपितप्रतियोगित्वाप्रसिध्या उक्तस्थले ध्याप्तिसिद्धयभावप्रसंगात्, नच साध्यता

वच्छेदकसम्बन्धेन वृत्तिमदावृत्साध्यनिरूपितप्रतियोगिताया निवेशनीयतया नोक्ताप्रसिद्धिरिति वाच्यम्, सर्वत्र समवायिन्येकया सत्तयैव तादृशप्रमेयाभावाभाववत्ताप्रतीतिनिर्वाहे सर्वसमवाय्यसङ्ग्राहकगुणादीना तादृशप्रमेयाभावाभावत्वे मानाभावेन दर्शिताप्रसिद्धेर्दुर्वारत्वात्, इतिचेन्न, साध्यतावच्छेदकसम्बन्धेनवृत्तिमद्यत्किञ्चित्साध्यनिरूपितत्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धानिवेशेनोपपत्ते, कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्य दर्शितसाध्याभावाभावस्य साध्यत्वेपि तस्य साध्यतावच्छेदकसमवायसम्बन्धेनावृत्तित्वात्। नचेवमपि कालिकसम्बन्धेन प्रमेयसाध्यककालत्वादिहेतावव्याप्ति, कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य य कालिकसम्बन्धावच्छिन्नप्रतियोगिताको ऽभाव तस्य स्वाभावात्मकस्य प्रमेयत्वेन साध्यस्य प्रतियोगितावच्छेदकीभूतकालिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रमेयाभावाधिकरणे हेतोर्वृत्तेरिति वाच्यम्, तादृशप्रतियोगितावच्छेदकयत्सम्बन्धेन साध्यवद्भिन्नवृत्तित्वमभावस्य तत्सम्बन्धेन तद्वत्त्वस्य विवक्षणीयत्वात्, उक्तस्थले च साध्याभावस्य कालिकसम्बन्धेन साध्यवद्भिन्ने अवृत्ते। अथैव तादृशप्रतियोगिताया स्वनिष्ठत्वनिवेशो विफल, तदनिवेशे घटभिन्न घटत्वाभावादित्यादौ घटभेदात्मकसाध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटत्वात्मकसाध्याभाववति घटत्वे घटत्वाभावरूपहेतोर्वृत्ते रव्याप्तिप्रसक्तावपि तादृशाव्याप्तेरीदृशविवक्षयैव वारणसम्भवात्, घटत्वरूपसाध्याभावस्य साध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्यवद्भिन्ने घटे ऽवृत्ते, नचेव तादृशसाध्यस्य तादृशसम्बन्धेन साध्यवद्भिन्नवृत्तिरभाव एव अप्रसिद्ध इति कथमव्याप्तिपरिहार इति वाच्यम्, घटभेदस्य घटत्वाभावसमनियतत्वेन तदभिन्नतया घटत्वेपि समवायसम्बन्धावच्छिन्नायास्तादृशप्रतियोगिताया सत्त्वेन तादृशप्रतियोगितावच्छेदकसमवायेन साध्यवद्भिन्नवृत्तिघटत्वरूपसाध्याभावस्य प्रसिद्धिसम्भवात्, तादृशाभावयोर्भेदे स्वनिष्ठत्वस्य प्रतियोगिताविशेषणत्वेपि

यदस्वरूपसाध्याभावनिष्ठसाध्यनिरूपितप्रतियोगित्वाप्रसिद्ध्या दद्दोषतादव स्थ्यात्, सयोगिभेदस्य व्याप्यव्याप्यवृत्तित्वरूपवैधर्म्येण सयोगाभावा भेदासम्भवेपि सयोगवत्त्वप्रमाविषयत्वाभावाभेदे बाधकाभावात्स्वरूपसम्बन्ध स्यापि साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धतया तेन सम्बन्धेन साध्यवद्भिन्नवृत्तेस्तादृशप्रमाविषयत्वरूपसाध्याभावस्याप्रसिद्ध्या सयोगिभिन्न गुणत्वादित्यादावव्याप्तेरनवकाशात्, इतिचेन्न, - प्रतियोगितायाः स्वनि ष्ठत्वानिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावादौ साध्ये आत्मत्वादिहेतावव्याप्तेर्दुर्वारत्वात्, तादृशसाध्यस्य य कालिक सम्बन्धावच्छिन्नाभाव• दैशिकविशेषणतासम्बन्धावच्छिन्नतदभावस्य तादृश साध्यस्वरूपतया दैशिकविशेषणतासम्बन्धस्य साध्यनिरूपितप्रतियोगिता वच्छेदकसम्बन्धत्वात्तेन सम्बन्धेन आकाशाभावरूपसाध्याभावस्य साध्य वद्भिन्नकाले हेतुमति च वृत्ते । प्रतियोगितायाः स्वनिष्ठत्वनिवेशे दैशिक विशेषणतायाः आकाशाभावनिष्ठसाध्यनिरूपितप्रतियोगितावच्छेदकसम्ब न्धत्वविरहेणाव्याप्तेरनवकाशात् । नच साध्यनिरूपितस्वनिष्ठप्रतियोगिता निवेशे साध्याभावपदोपादानवैयर्थ्यम्, अभावान्तरनिष्ठप्रतियोगितायाः स्साध्यनिरूपितत्वविरहेणैव तद्व्यावृत्तेरिति वाच्यम्, स्वपदार्थस्य द्विधा निवेशेन साध्याभावनिष्ठसाध्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्या भाववत्त्वनिवेशगौरवेण तत्पदवैयर्थ्यानवकाशात् । तादृशसम्बन्धेन साध्य वद्भिन्नवृत्तिमत्त्वमात्रनिवेशे साध्यवद्भिन्नवृत्त्यभावान्तरवति हेतोर्वृत्त्या अनु पपत्ते । इत्याहु ।

अत्रेदवोध्यम्,— साध्यवत्त्वग्रहविरोधिग्रहविषयसम्बन्धत्वेन साध्य निरूपितप्रतियोगितावच्छेदकसम्बन्धत्वेन वा नानुमित्यौपयिकव्याप्तिशरीरे अभावसम्बन्धनिवेशसम्भव, साध्यादिभेदेन व्याप्तेर्भेदात्, लाघवेन तत्तत्सा ध्यकस्थले तत्तत्साध्याभाववति दैशिककालिकविशेषणतासमवायादिससर्गाणा मेव विशिष्याभावसम्बन्धतया निवेशौचित्यात्, उक्तरूपेण विशेषणताविशेषा

दीना सम्बन्धतया अत्यन्तमप्रामाणिकतया तद्रूपावच्छिन्नस्य सम्बन्धविधया व्याप्तिघटकत्वायोगाच्च ; परन्तु यादृशसाध्यकस्थले यादृशसम्बन्धो ऽभाव सम्बन्धतया व्याप्तिघटक तत्परिचयायैव दर्शितोक्तय, तथाच यादृश सम्बन्धेन प्रकृतसाध्यवति तद्भिन्नवृत्तिसाध्याभावो न वर्तत तादृशसम्ब न्धेन तद्वृत्त्य निवेश्यमित्युक्तयेव तत्परिचयसम्भवादल वाग्जालेन ।

साध्याभाववत्पदेन साध्याभावत्वविशिष्टाधिकरण विवक्षणीयम्, तेन "गुणान्यत्वविशिष्टसत्ताभाववान् गुणत्वा' दित्यादौ विशिष्टस्यानतिरिक्ततया सत्तारूपसाध्याभावस्य गुणादौ सत्त्वेपि न क्षति, गुणे गुणान्यत्वविशिष्ट सत्ताभावो नास्तीत्यप्रत्ययात् तत्र तादृशाभावत्वविशिष्टाधिकरणत्वा नभ्युपगमात् ।

अथैतल्लक्षणे "घटत्वघटाकाशसयोगान्यतराभाववान् आकाशत्वा" दित्यादावव्याप्ति, घटत्वस्य व्याप्यवृत्तितया तद्घटितान्यतराभाववद्भिन्ने घटे वर्तमानस्य घटाकाशसयोगात्मकसाध्याभावस्य हेत्वधिकरणे गगनेपि वृत्ते, निरवच्छिन्नसाध्याभाववत्तानिवेशे च साध्यवद्भिन्नवृत्तित्वनिवेशस्य वैयर्थ्यादिति चेन्न, — एतल्लक्षणकर्तृमते स्वप्रतियोगिसामानाधिकरण्य स्वप्रतियोगिवैयधिकरण्यरूपविरुद्धधर्माध्यासो ऽभावभेदक इत्येतादृश युक्त्या द्रव्यवृत्तिसयोगाभावगुणवृत्तिसयोगाभावयोर्भेदसिद्धिरित्यव्याप्यवृत्ति साध्यकस्थले ऽव्याप्तिस्समाधीयते, तथा च घटाकाशसयोगस्योक्तान्य तराभावप्रतियोगित्वेपि न तदभावरूपता तथा सति तादृशविरुद्धधर्मयो स्समावेशापत्ते, तयोर्विरोधाभावे सयोगाभावस्याप्यधिकरणभदेन भेदा सिद्धे अव्याप्यवृत्तिसाध्यके सर्वत्रैवाव्याप्ते एतदभिप्रायेण लक्षणान्तर स्यावतारणीयत्वादिति गगने अतिरिक्त एव तदभावस्स्वीकरणीय, स च न साध्यवद्भिन्नवृत्तिरिति न दोष ।

# साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम् ,

[दी] कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यव दिति ।

" साध्यवद्भिन्ने वर्तत " इत्यनेन निरवच्छिन्नवृत्तित्वरूपपर्यवसितार्थ तात्पर्यात् घटाकाशसंयोगात्मकाभावमादाय न दोष इति तु न श्रद्धेयम् –तथा सति सुषुप्त्यादिकालावच्छेदेन अस्मदाद्यात्मवृत्तौ स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानत्वाद्यभावे साध्ये सुखादावव्याप्तिः, तत्र साध्यवद्भिन्ने ईश्वरे तादृशसम्बन्धेन निरवच्छिन्नवृत्तिकस्य ज्ञानत्वादिरूपाभावस्य तेन सम्बन्धेन सुखाद्यधिकरणे अस्मदाद्यात्मन्यपि वृत्ते । उत्पत्तिकालावच्छिन्नघटादिवृत्तितादृशसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावादिसाध्यकघटत्वादिहेतावव्याप्तश्च ।

संयोगाभावनिष्ठयो व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयो प्रतियोगिसामानाधिकरण्य प्रतियोगिवैयधिकरण्ययो वक्ष्यमाणरीत्या न विरोध इत्यभिप्रायेण अव्याप्यवृत्तिसाध्यकस्थले अव्याप्त्या लक्षणान्तरमवतारयति – घर्मादा विति ।

इद त्ववधेयम्;—द्रव्यवृत्तिसंयोगाभावो न गुणादौ स्वीक्रियते, अपि तु क्लृप्तद्रव्यवृत्तिसंयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभाव एव संयोगाभावत्व कल्प्यते, अनन्तगुणाद्यधिकरणे संयोगाभावकल्पनामपेक्ष्य तथा विधैकाभावे संयोगाद्यभावत्वकल्पने लाघवात् , नच संयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे द्रव्यत्वाभावद्रव्यभेदसंयोगिभेदादौ वा संयोगाभावत्व कल्प्यत इत्यत्र विनिगमकाभाव इति वाच्यम् , तादृशाभावाना सम-

# सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्,

[दी] हेतोस्साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह— सकले ति । साकल्य साध्याभाववति साध्ये च बोध्यम् ।

नियततया अभेदात् । एवञ्च द्रव्यवृत्तिसयोगाभावगुणवृत्तिसयोगाभावयो र्भेद स्सप्रमाण एव । अथैव द्रव्यत्वाभावादीनाम प्यानन्त्यापात्ति, फर्मादौ गुणवृत्तिद्रव्यत्वाभावो न कल्प्यते, अपि तु फलसतद्वृत्तिद्रव्यगुणान्यतरत्वाभाव एव तदभावत्वमित्यादितर्कोपणया फर्मादिवृत्तिद्रव्यत्वाभावस्य गुणादिवृत्तितदभावतो भेदसिद्धेरिति चेत्?, इष्टमेवैतदधिकरणभेदेनाभावभेदवादिनाम् । नचैव सयोगाभावत्वकल्पनाया धर्मिणामप्यानन्त्यादुक्तविनिगमकासम्भव इति वाच्यम्, विनिगमनाविरहेणापि द्रव्यत्वाभावादौ सयोगाद्यभावत्वकल्पनाया निष्प्रत्यूहत्वादिति ।

हेतो रिति । नानाधिकरणकस्येत्यादि । अव्याप्ते रिति । "एतद्रूपवानेतद्रसा" दित्यादौ एतद्रसाद्यधिकरणे एतद्रूपाधिकरणस्य द्वित्वादिना भेदसत्वेपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन साध्यवन्निष्ठप्रतियोगित्वे प्रतियोग्यवृत्तित्वेन वा भेदे विशेषिते लक्षणगमनसम्भवान्नासम्भवो दर्शित । साकल्य मिति । बोध्य मित्यस्य विशेषण मित्यादि । अत्र साध्याभाववति साकल्यविशेषणसत्त्व एव साध्ये तद्विशेषणस्य व्यावृत्तिस्सगच्छते अन्यथा साध्याभाववत्ताया हेतुमत्साधारण्येपि साध्याभाववद्यत्किञ्चिद्व्यक्तिनिष्ठाभावप्रतियोगित्वमादाय नानाव्यक्तिसाध्यकसद्धेतौ लक्षणसमन्वयसम्भवात् । अत "साध्ये तदभावतिचे" त्यनुक्त्वा साध्याभाववति साकल्यविशेषण प्रथमतो दर्शितम् । नच साध्याभाववति

साकल्यविशेषणासत्त्वेपि "वह्निमान् पर्वतान्यत्वा" दित्यादौ अतिव्याप्ति वारणमेव स ये साकल्यप्रयोजनमस्ति, उभयत्र साकल्यविशेषणादाने यत्किंचित्साध्याभाववति पर्वते हेत्वभावसत्त्वा दतिव्याप्तिः; साध्ये साकल्यविशेषणसत्त्वे तु ह्रदादेरेव सकलसाध्याभाववत्तया तत्र हेतुसत्त्वेन अतिव्याप्त्युद्धारादिति नोक्ताभिप्रायवर्णनं सम्यगिति वाच्यम्;– साध्याभाववति साकल्यविशेषणासत्त्वे साध्ये साकल्यविशेषणस्योक्तातिव्याप्ति वारणप्रयोजनकत्वसम्भवेपि वक्ष्यमाणप्रयोजनस्यैव वास्तवतया तस्य साध्याभाववति साकल्यविशेषणसत्त्वएव सङ्गते· आदौ तत्प्रदर्शनस्योचितत्वात् ।

वस्तुतस्तु; – साध्ये साकल्यविशेषणं परित्यज्य साध्याभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वनिवेशनरूपकल्पान्तरस्यावलम्बनीयतया चरममेव तत्प्रदर्शनमुचितम्, "साध्ये तदभाववति च बोध्य" मित्युक्त्वा "साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको या अभावो ग्राह्य" इत्युक्तौ 'साध्याभाववति साकल्यं निवेश्यते' साध्याभावो वा एतादृशो निवेश्यते'' इत्येतादृशविकल्प प्रतीयेत, सच अविवक्षित इति तु सारम् ।

अव्याप्तिवारणाय साध्याभावे साकल्यविशेषणे "धूमवान् वह्ने" रित्यादौ साध्यतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकसकलसाध्याभावाधिकरणं गुणादिरेव स्यात्, अयोगोळकादे· ह्रदासंयुक्तत्वावच्छिन्नाभावानधिकरणत्वा दित्यतिव्याप्ति; "वह्निमत्त्वप्रकारकप्रमाविषयो धूमा" दित्यादौ साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्षमात्रवृत्तितया सकलसाध्याभावाधिकरणाप्रसिद्ध्या अव्याप्तिश्चेति तदुपेक्ष्य साध्ये साकल्यविशेषणं निवेशितम् । ननु साध्ये साकल्यविशेषणदानेपि "वह्निमान्

[दी]साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्य, तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्ति, न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्ति।अव्याप्यवृत्ति साध्यकव्या-प्यवृत्तिसद्धेतावव्याप्ते व्यभिचारिणिचा व्याप्यवृत्तावतिव्याप्तेर्वारणाय

---

धूमा" दित्यादौ अव्याप्तितादवस्थ्यम्, पर्वतादावपि पर्वती यवह्नि द्वित्वादिना अभावसत्त्वेन सकलसाध्याभावसत्त्वात्। व्यास ज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेनाभावविशेषणे च "वह्निधूमोभय वान् वह्ने" रित्यादावनिव्याप्ति. वह्निमत स्तथाविधसकलसाध्याभावा नधिकरणत्वात्। साध्यतावच्छेदकातिरिक्तो यो व्यासज्यवृत्तिधर्म तदन वच्छिन्नप्रतियोगिताकत्वानिवेशने च लाघवा त्साध्यतावच्छेदकावच्छिन्न प्रतियोगिताकत्वस्यैवाभावे निवेशनमुचितम्, किं साध्ये साकल्यविशेषणेन' इत्यभिप्रेत्य तथैवाह—साध्यतावच्छेदके ति। साध्याभाववति साक ल्यविशेषणप्रयोजनमाह—विपक्षे ति। वैकल्पिकयो स्साध्यतदभावयो साकल्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविशेषणयो र्व्यावृत्तिमाह-नवे ति। एकव्यक्तिसाध्यके "एतद्रूपवान् एतद्रसा" दित्यादौ हेत्वधि करणे पूर्वक्षणवृत्तित्वविशिष्टसाध्याभावो न प्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिव्यधिकरण, पूर्वक्षणवृत्तित्वविशिष्टैतद्रूपादे रेतद्रसाधिकरणे वृत्ते। एतद्रूपतद्रूपोभयत्वावच्छिन्नोऽभावोपि न तथा, प्रतियोगितावच्छेदकावच्छि न्नाधिकरणाप्रसिद्धे तत्र लक्षणसगतेरित्यतो नानाव्यक्तिके त्युक्तम्। अतएवाव्याप्तिरेवोक्ता, नासम्भव। अत्र च नानाव्यक्तिसाध्यकत्व व्यधि करणद्वयवृत्तिसाध्यतावच्छेदकत्वम्, अतएव "एतद्वृत्तियावद्धर्मवान् एतत्त्वा" दित्यादौ नानाव्यक्तिसाध्यके अव्याप्तिविरहेपि न क्षति।

अव्याप्यवृत्ती ति। "कपिसयोगी एतद्वृक्षत्वा" दित्यादावि-त्यर्थ। अव्याप्तेर्वारणाये त्यन्वय। व्यभिचारिणिचे ति। "एतद्वृक्ष

[टी] अभावद्वये प्रतियोगिवैयधिकरण्य बोध्यम् ।

त्ववान् कपिसंयोगी" त्यादावित्यर्थ । अभावद्वये— साध्याभावे हेत्व भावे च । तथाच अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तिवारणाय साध्याभावे, व्यभिचारिणिचाव्याप्यवृत्तावतिव्याप्तिवारणाय हेत्वभावे प्रति योगिवैयधिकरण्यमित्यर्थ । यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्य विशेषणस्यावश्यकतया "कपिसंयोगी कपिविभागा" दित्याद्यव्याप्य वृत्तिहेतुके अव्याप्तिवारणप्रयोजनकञ्च साध्याभावे तद्विशेषणस्य सम्भव तीति व्याप्यवृत्ती त्यकिञ्चित्करम्, तथापि हेत्वभावे तद्विशेषणप्रति- सन्धान विनैव व्याप्यवृत्तिहेतुकस्थले अव्याप्तिनिर्णयो भवतीत्यभि सन्धायैतदुक्तम् ।

प्रतियोगिवैयधिकरण्यञ्च न प्रतियोग्यधिकरणावृत्तित्वम्, अव्याप्य वृत्तिसाध्यके तथाविधहेतुकेच तादृशसाध्याभावहेत्वभावाप्रसिद्धया ऽव्याप्तेः, अपि तु प्रतियोग्यनधिकरणवृत्तित्वम् । तथाच प्रतियोग्यनधिकरणवृत्ति त्वविशिष्टसाध्याभावाधिकरणेषु यावत्सु प्रतियोग्यनधिकरणवृत्तित्वविशिष्ट स्सन् वर्तते यो ऽभाव तत्प्रतियोगित्वमित्यर्थ, तेन "कपिसंयोगी एतद्वृ क्षत्वा" दित्यादौ कपिसंयोगाद्यनधिकरणगुणादिवृत्तित्वोपलक्षितकपि संयोगाभावस्य हेत्वधिकरणे सत्त्वेपि नाव्याप्ति, न वा 'एतद्वृक्षत्व वान् कपिसंयोगा" दित्यादौ तथाविधकपिसंयोगाद्यभावस्य सकलसाध्या भावाधिकरणे सत्त्वेप्यतिव्याप्ति । प्रतियोग्यनधिकरणीभूतसाध्याभावा धिकरणयावन्निष्ठ स्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितो ऽर्थ । प्रथमे साध्यतावच्छेदकसम्बन्धेन, चरमे हेतुतावच्छेदकसम्बन्धेन च प्रतियोग्यनधिकरणत्व बोध्यम्, तेन "अयमात्मा आत्ममहाकालान्यत- रत्वा" दित्यादौ व्यभिचारनिरूपकाधिकरणस्य कालस्य कालिकसम्बन्धेन साध्याधिकरणत्वेपि नातिव्याप्ति, न वा "वह्निमान् धूमा" दित्यादौ

[दी] हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो बोध्य । तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम् । तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्ति, न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्त्वादौ व्यभिचारिण्यतिप्रसङ्ग ।

---

साध्याभावाधिकरणयावदन्तर्गतकालज्ञानादिषु कालिकविषयित्वादिसम्बन्धेन हेत्वभावप्रतियोग्यधिकरणतासत्त्वेऽप्यसम्भवोऽव्याप्तिर्वा । इत्थञ्च प्रतियोगित्वे सम्बन्धविशेषावच्छिन्नत्वं न निवेशनीयं, सम्बन्धान्तरावच्छिन्नप्रतियोगिताकयो साध्याभावहेत्वभावयो उक्तसम्बन्धेन प्रतियोगिसमानाधिकरणतया असम्भवातिव्याप्त्योरनवकाशात् ।

**हेत्वभावोऽपी**ति । अपिशब्देन साध्याभावेऽपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यं निवेशनीयमिति सूच्यते, तेन "विशिष्टसत्तावान् जाते" रित्यादौ हेत्वधिकरणगुणादिषु साध्याभावप्रतियोगिन स्सत्त्वादे स्सत्त्वेऽपि नातिव्याप्ति । अत्र "साध्याभावोऽपी" त्युक्तौ अभिमततत्पदेन हेत्वभावपरामर्शासम्भव, तत्र हेत्वभावपदोपादाने चाक्षराधिक्यमिति तथोक्तम् । **तत्प्रतियोगित्वम्** – साध्याभाववन्निष्ठाभावप्रतियोगित्वम् । **हेतुतावच्छेदकरूपेण** – हेतुतावच्छेदकावच्छिन्नमित्यर्थ । हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशनप्रयोजनमाह **द्रव्यत्वादा**विति । **विशिष्टसत्ते**ति । गुणकर्मान्यत्वविशिष्टसत्तेत्यर्थ । प्रतियोगिताया हेतुतावच्छेदकावच्छिन्नत्वनिवेशनस्य फलमाह **नवे**ति । अत्रापि **द्रव्यत्वादौ साध्ये** इत्यनुषज्यते । **विशिष्टसत्तात्वादिना** गुणकर्मान्यत्वविशिष्टसत्तात्वादिना । तृतीयार्थश्च अवच्छिन्नप्रतियोगिताकत्वम्, तस्य चाभावेऽन्वय, प्रतियोगिपदार्थैकदेशप्रतियोगित्वान्वितमवच्छिन्नत्वं वा तदर्थ । **तादृशाभावे**ति ।

[दी ] यत्रैकव्यक्तिक साध्य विपक्षो वा तत्र

---

सकलसाध्याभाववन्निष्ठाभावेत्यर्थः । नच हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्थले हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेश्यताम्, ततोपि तत्प्रयोजननिर्वाहात्; तथाच "द्रव्य सत्त्वा" दित्यादौ विशिष्टसत्ताभावस्य हेतुतावच्छेदकावच्छिन्नसमानाधिकरणतयैव अति व्याप्तिवारणसम्भवात् प्रतियोगिताया हेतुतावच्छेदकावच्छिन्नत्वनिवेशन मफलमिति वाच्यम्; हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकल साध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्ट निरूपिताधिकरणता तन्निरूपकाभावप्रतियोगित्व मर्थस्स्यात्, तदपेक्षया सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्न यादृशप्रतियोगिता वच्छेदकावच्छिन्नाधिकरणता तद्धर्मरूपास्मदीयफलितार्थस्यागुरुत्वात् । नच ममापि सकलसाध्याभाववन्निष्ठ यद्धर्मावच्छिन्नानधिकरणत्व तद्धर्म वत्त्वमित्यर्थः, सच निरुक्तिरिति वाच्यम्, एतादृशार्थकरणे मूलोक्त प्रतियोगिताया व्याप्तित्व व्याहन्येतेति मूलानुसारेण दीधितिकृता गुर्वर्थानु सरणात् उक्तविशेष्यविशेषणभावेन निवेशे व्यर्थविशेषणतानवकाशात् ।

एतल्लक्षण दूषयित्वा उत्तरलक्षणमवतारयति— यत्रैकव्यक्तिक मिति । यत्रैकव्यक्तिक साध्य तत्राव्याप्तिरित्यन्वय । "एतद्रूपवानेतद्रसा" दित्यादावव्याप्तिरित्यर्थ । अनेकाशेषपरत्वरूपसाकल्यस्य साध्ये असत्त्वा दिति भाव । साध्ये साकल्यविशेषण परित्यज्य कल्पान्तरानुसरणात् न तत्रैतद्दोषावकाश इत्यत आह विपक्षो वे ति । विपक्षः - साध्याभाव वान् । अत्र "एकव्यक्तिक मित्यस्य विपरिणतस्यानुषङ्ग, तथाच तद्घट भिन्न पटत्वा" दित्यादौ साध्याभाववति तद्घटादौ साकल्याप्रसिद्ध्या अव्याप्तिरित्यर्थ । सकलशब्दस्याशेषमात्रपरत्वे दोषमान्तरमाह —

# साध्यवदन्यावृत्तित्वंवा; केवलान्वयिन्यभावात् ।

निर्धूमत्वव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौचाव्याप्ति, तत्र हेत्वभावस्य वह्न्यादे प्रत्येक यावद्विपक्षावृत्तित्वादतआह— साध्यव दिति ।

---

निर्धूमत्वव्याप्य इति । तत्त्वेन— निर्धूमत्वव्याप्यत्वेन । तथाच "धूमत्वा वच्छिन्नाभावव्याप्यवान् वह्नित्वावच्छिन्नाभावा" दित्यादावित्यर्थ । निर्धूमत्वत्वावच्छिन्ने साध्ये एकव्यक्तिकतया पूर्वदोषाक्रान्तत्वेन तद्व्या प्यसाध्यकानुसरणम् । निर्धूमत्वव्याप्यस्य ह्रदत्वादे स्वाद्रूप्येण साध्यताया सद्धेतुत्वानुपपत्ति, अत स्तत्त्वेने त्युक्तम् । हेत्वभावस्ये ति । अथ वह्न्यात्मकहेत्वभावस्य प्रत्येक सकलसाध्याभाववन्निष्ठत्वासम्भवेपि सकल तन्निष्ठवह्न्यभावादिभेदप्रतियोगिता मादायैव लक्षण सङ्गमनीयम्, हेतु तावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशादेव व्यभिचारिणि सम्बन्धा न्तरावच्छिन्नप्रतियोगिताकहेत्वभाव मादायातिप्रसङ्गानवकाशेन हेत्वभाव प्रतियोगिताया हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात् ।

यत्तु वह्निमद्भेदहेतुताभिप्रायकोय ग्रन्थ, तत्र हेतुभेदमादायापि लक्षणग मनाऽसम्भव, भेदभेदस्यानवस्थाभयेन अधिकरणस्वरूपतया तस्य च प्रत्येक विश्रान्ततया यावद्विपक्षवृत्तित्वासम्भवादिति, तन्न, आकाशाभावाधि करणकभेदभेदस्याकाशाद्यभावास्वरूपतया तस्य च यावद्विपक्षवृत्ति त्वेन तमादायैव लक्षणगमनसम्भवात् । नचैवंरीत्या आकाशाभावमादाय भेदहेतुकव्यभिचारिण्यतिव्याप्तिप्रसक्त्या हेत्वभावत्वेन सकलसाध्याभावा धिकरणवृत्तित्व विवक्षणीयम्, तथासत्यधिकरणस्वरूपाभावस्य स्वाभिन्नेव तदभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाश, एवञ्चाकाशाभावमादाय नोक्ताव्याप्तिपरिहारसम्भवइति वाच्यम्, उक्तस्थले आकाशाभावस्य

हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिरहादेवातिव्याप्तिवारणस्सम्भवेन एतादृशनिवेशाया निष्प्रयोजनकत्वात्, वह्निभेदहेतुकस्थले च साध्याभावाधिकरणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेन आकाशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेन अव्याप्तिवारणसम्भवादिति चेत्, —

अत्र केचित्, — यत्र वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्य साध्यवह्न्यभावान्यत्वविशिष्टवह्न्यभावो हेतु, तत्र वह्न्यभावस्यापि सकलसाध्याभाववदन्तर्गततया तत्र वह्न्यभावभेदासत्त्वेन तमादाय लक्षणगमनासम्भवात् । न च तादृशविशिष्टहेतुकस्थले हेतुभेदस्य सकलसाध्याभाववन्निष्ठत्वासम्भवेपि अखण्डस्य विशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षण सङ्गमनीयमिति वाच्यम्, — प्राचीनमते विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्या मनतिरिक्तत्वेन तादृशविशिष्टाभावस्य वह्न्यभावत्ववह्न्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासम्भवात् । अथैवमपि विषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावात्यन्ताभावस्याखण्डतया सकलधूमवन्निष्ठतया तमादायैव लक्षण सङ्गमनीयमिति चेन, —

वृत्त्यनियामकतया विषयितादिसम्बन्धाना मत्यन्ताभावप्रतियोगितावच्छेदकत्वात् । सयोगादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावस्याखण्डस्य सकलधूमवन्निष्ठत्वेपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्ना, तत्र लाघवेनाभावत्वस्यैवावच्छेदकत्वादिति न तमादायापि लक्षणसङ्गति । न च गुरुधर्मावच्छिन्नहेतुक[illegible] लक्षणसङ्गमनाय पारिभाषिकमेवावच्छेदकत्व हेतुतावच्छेदके [illegible], तथाच वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वमक्षतमेवेति [illegible]; [illegible]लक्षणस्य परित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन [illegible] न विशिष्टानेत्यभिप्रायेणैव तद्दोषदानादिति वदन्ति ।

तदसत्,—

तथासत्यपि सकलसाध्याभाववन्निष्ठकालिकसम्बन्धावच्छिन्न प्रतियोगिताकवह्न्यभावाभावमादाय लक्षणसमन्वयसम्भवात्। नच जन्यमात्रस्य कालोपाधितानये साध्याभाववति पर्वतादौ कालिकसम्बन्धेन वह्न्यभावसत्त्वात् तत्र तत्सम्बन्धेन तदभावो न वर्त्ततएवेति वाच्यम्; कालिकसम्बन्धेन तत्र वह्न्यभावसत्त्वेपि प्रतियोग्यनधिकरणीभूतवह्निमद्देशावच्छेदेन तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्यापि सत्त्वात्; एव विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्या मनतिरिक्तत्वे " द्रव्य विशिष्टसत्त्वा " दित्यादावेवाव्याप्तिसम्भवे तदुपेक्षाया निर्बीजत्वाच्च। एतेन " विशेषणताविशेषसम्बन्धेन वृत्तिघटितसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावव्याप्यधान् तादृशसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावा " दित्येतत्परम्, तत्र धूमसामानाधिकरण्य रूपस्य सकलसाध्याभावस्याधिकरण हेतुरपि, तस्य धूमाधिकरणे सत्त्वात् तत्र च हेतुभेदमादायापि न लक्षणसमन्वयसम्भव, अत्यन्ताभावमादाय तदसम्भवो दर्शितरीत्या ऽवसेय। इत्थञ्च विशिष्टाभावस्य विशेष्या भावविशेषणाभावाभ्या मतिरिक्तत्वेपि न दोषासङ्गतिरिति परास्तम्; तत्रापि कालिकसम्बन्धावच्छिन्नाभावमादाय दोषवारणसम्भवात्। तस्मात् प्रतियोगितावच्छेदकसम्बन्धेनैव प्रयियोगिवैयधिकरण्य निविष्टम्, प्रति योगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वेन निविष्टेत्यभिप्रायेणैवैतद्दोष दानम्। हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यप्रवेशेस्त्वग्रिमलक्षणापेक्षया गौरवमेवैतल्लक्षणपरित्यागे बीज बोध्यम्।

एतेन सकलशब्दस्य व्यापकत्वार्थकतया साध्याभावव्यापकीभूता भावप्रतियोगित्वमेवैतल्लक्षणनिष्कृष्टार्थ. " धूमवान् वह्ने " रित्यादौ प्रमेय त्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वेपि न क्षति, यद्रूपावच्छिन्न

प्रतियोगिताकाभावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपवत्त्वस्यैव लक्ष
णत्वात्; एवंच हेत्वभावे प्रतियोगिवैयधिकरण्यं न निवेश्यते, व्याप
कतालक्षणे प्रतियोगिवैयधिकरण्यानिवेशेनाव्याप्यवृत्तिहेतुकव्यभिचारिणि हेत्व
भावस्य साध्याभाववन्निष्ठहेतुरूपाभावप्रतियोगितया व्यापकत्वाभावेनाति-
व्याप्तिविरहात् । व्यापकताशरीरे च हेतुतावच्छेदकसम्बन्धेन साध्याभाव
वन्निष्ठत्व मभावे निवेश्यम्, तेन वह्न्याद्यभाववति कालिकादिसम्बन्धेन
धूमाद्यात्मकाभावस्य वृत्तावपि धूमाभावादे र्नसाध्याभावव्यापकताक्षतिः ।
" सत्तावान् जाते " रित्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन
वृत्तेरप्रसिध्या अव्याप्तिस्तु लक्षणपक्षकृत एव दोषः । यद्वा हेतुताव-
च्छेदकसम्बन्धेन हेतुमत्ताज्ञानंप्रति यादृशसम्बन्धेन हेत्वभाववत्ताग्रहः
प्रतिबन्धकः तादृशसम्बन्धेन स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकं
यद्यत्त्वं तत्तद्भिन्नत्वमेव साध्याभावव्यापकतावच्छेदकत्वम्, इत्थंच
" सत्तावान् जाते " रित्यादावेतादृशं स्वं जातित्वाभावत्वादिकमेव, त
द्भिन्नञ्च जात्यभावत्वमिति लक्षणसमन्वयः । इत्थञ्च " एतद्वृक्षत्ववान्
कपिसंयोगा " दित्यादौ कपिसंयोगाभावत्वावच्छिन्नानधिकरणत्वाप्रसिध्या
कपिसंयोगाभावत्वं नैतादृशं स्वमिति कपिसंयोगाभावत्वस्य साध्याभाव
व्यापकतावच्छेदकत्वादतिव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यं
देयमेव, न देयमेववा अधिकरणत्वाभावस्यैव अधिकरणभिन्नत्वस्थाने निवेश
नीयत्वात् कपिसंयोगाभावादेरपि तदधिकरणताया अप्यव्याप्यवृत्तितया तद
भावस्य साध्याभाववति सत्वेनातिव्याप्त्यनवकाशात्; अधिकरणत्वाभा-
वादिश्च भावप्रतियोगिकतया अतिरिक्तएवेति विशेषणताविशेषेणैव त-
द्वृत्त्व साध्याभाववति निवेशनीयमिति । एवञ्च " निर्धूमत्वव्याप्यवान्
निर्वह्नित्वा " दित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्ति
त्वेपि हेत्वभावेन तेषा सा[illegible]व्याप्त्यादान्याप्तिरिति पूर्वपक्षो-

[दी] अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम्, न हि भवति ' नीलो घटो घटादन्य " इति ।

---

प्यकिञ्चित्कर, यत्र यावता साध्याभाववता सम्भव स्तत्र प्रातिस्विकरूपेण तत्तदधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटकम्, न तु साध्याभावव्यापकत्वमित्यभिप्रायेणैव एतद्व्यपदानात्, प्रकारान्तरानुसारेण परिष्कारे सदललक्षणानामेव परिष्कारसम्भवादितिकृत पल्लवितेन ।

साध्यवद्व्यक्तिविशेषभेदमादायाव्याप्तिं परिहरति— अत्रे ति । साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्व मिति । साध्यतावच्छेदकविशिष्टसाध्यवत्त्वपर्याप्तप्रतियोगितावच्छेदकताकत्वमित्यर्थ । तेन " वह्निमान् धूमा " दित्यादौ तत्तद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदमादाय न दोष, तादृशभेदप्रतियोगितावच्छेदकताया तत्त्वविशिष्टवह्निमत्त्वएव पर्याप्तत्वात् । व्युत्पत्तिबललभ्यम्— अन्यादिपदसमभिव्याहारलभ्यम् । नञ्पदसमभिव्याहारज्ञानस्येव तादृशपदसमभिव्याहारज्ञानस्याप्यन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावशाब्दबुद्धित्वावच्छिन्नप्रत्येव जनकत्वादिति भाव । व्युत्पत्तिबललभ्य मित्यनेन यथाश्रुतलक्षणवाक्यार्थएवायमिति सूचितम् । तादृशसमभिव्याहारस्थले तत्प्रतियोगिकाभावमात्रबोधे अतिप्रसङ्ग सूचयति— **नहि भवती** ति । " प्रामाणिकव्यवहार " इति शेष । तथाच अन्वयिप्रतियोगिकाभावमात्रबोधे नीलघटेपि पीतघटादिभेदसत्त्वेन तादृगव्यवहारोपि स्यादिति भाव । एवं " द्रव्यं न घट "इत्याद्यप्रयोगादनुयोगितावच्छेदकावच्छेदेनैव अन्योन्याभावादि रन्यादिपदेन प्रत्याय्यते, अनुयोगितावच्छेदकश्च प्रतियोग्यवृत्तिरेव धर्मइति प्रकाशकृदुक्तौकृत *व्युत्पत्तिविरोधात् " घटो घटादन्य " इति प्रयोगवारणसम्भवात् **नील** इति ।

"घटादन्य"इत्यादौ प्राचीनमते पञ्चम्या प्रतियोगित्वमर्थ ,तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य घटत्वाद्यवच्छिन्नत्वविशिष्टाधेयतासम्बन्धेनान्वय

---

* " व्युत्पत्त्यनुरोधात् " इति पाठान्तरम् ।

अथवा केवलमाधेयत्वमेव घटस्य सम्बन्ध, धर्मिपारतन्त्र्येण घटत्वादे रप्यवच्छिन्नत्वसम्बन्धेन तत्रान्वयोपगमात्, एकत्र विशेषणत्वेनोपस्थितस्या प्यन्यत्र पारतन्त्र्येणान्वयस्य व्युत्पत्तिसिद्धत्वात्, प्रतियोगित्वस्य च व्युत्पत्तिवैचित्र्येणान्यपदार्थैकदेशभेदे निरूपकतासम्बन्धेनान्वय । "घटा न्य" इत्यादौ निरूपकतासम्बन्धेन घटत्वाद्यवच्छिन्नप्रतियोगिताविशिष्टो लक्षणया घटादिपदार्थ, तत्पुरुषे पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्ट लाक्षणिकत्वात्, तादृशघटादिपदार्थस्य चाभेदसम्बन्धेन भेदे ऽन्वय । नवीनमते च "घटादन्य" इत्यादौ अनुयोगिता पञ्चम्यर्थ, तत्र प्रकृत्य र्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्ननिरूपकताकत्वसम्बन्धे- नान्वय, अनुयोगितायाश्च आश्रयतासम्बन्धेन भेदे ऽन्वय, समासस्थले च घटत्वाद्यवच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्वपदस्य लक्षणा, तस्य चाभेदसम्बन्धेन भेदे ऽन्वय ।

अथैव साध्यवदन्यावृत्तित्व मित्येतादृशलक्षणवाक्यादभेदसम्ब न्धेन तादृशप्रतियोगिताविशिष्टविशेषित तादृशानुयोगिताविशिष्टविशेषितो वा यो भेद तद्वदवृत्तित्वमेव प्रतीयते, तथाचानुमित्यौपयिकव्याप्तित्व रूपजिज्ञासाया तादृशलक्षणाभिधाने अर्थान्तरप्रसङ्ग, तादृशप्रतियोगिता सम्बन्धेन तादृशानुयोगितासम्बन्धेन वा साध्यवद्विशेषितभेदवदवृत्तिता ज्ञानस्यैव लाघवेन अनुमितिहेतुत्वादिति चेन्न,– यादृशव्याप्तिज्ञान मनु मितिहेतु स्तस्यामेवास्य तात्पर्यात्, तस्या शाब्दबोधाविषयत्वेपि तन्मू लकोदीच्यतादृशव्याप्तिविषयकमानसोपनीतमानस्यैव तादृशतात्पर्यनिर्वाह्य त्वात्, तादृशशाब्दबोधस्यापि कथञ्चिदुपपादयितु शक्यत्वाच्च । "नीलो घट कम्बुग्रीवादिमदन्य" इत्यादिवाक्यस्याप्रामाण्यात् "पट कम्बुग्री वादिमदन्य" इत्यादिवाक्यस्य प्रामाण्यादन्वयितावच्छेदकनिरूपित पारि भाषिकमवच्छिन्नत्व प्रतियोगिताया भासतइत्युपेयम्, अत साध्यवदन्य

इत्यादौ मतुबन्तप्रतिपाद्यतावच्छेदकस्य साध्यसम्बन्धस्य साध्यापेक्षया गुरुतया अनवच्छेदकत्वेपि नोक्तलक्षणवाक्यार्थाप्रसिद्धि ।

पारिभाषिक तदवच्छिन्नत्वञ्च तद्विशिष्टसम्बन्धिनिष्ठाभावीया या या प्रतियोगिता तदवच्छेदकत्वाभावकूटवदवच्छिन्नत्वम्, एतादृशावच्छिन्न त्वस्य सम्बन्धतया निवेशात् प्रातिस्विकरूपेण तत्तत्प्रतियोगितान्यक्तीनां दुर्ज्ञेयत्वेपि न क्षति, सम्बन्धज्ञानस्य विशिष्टबुद्धावनपेक्षितत्वात्। अनुमितिं प्रति च साध्यावच्छिन्नप्रतियोगितावगाहिज्ञानमेव कारण कल्प्यते लाघवात्, न तु साध्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानमिति अनुमित्यौपयिकव्याप्तिशरीरे तादृश्येव प्रतियोगिता निवेश्यते। "कम्बुग्रीवादिमत्वान् घटात्" इत्यादौ विशेषदर्शिना मनुमिते प्रामाणिकत्वे निरुक्तपारिभाषिकावच्छिन्नत्वमेव अनुमित्यौपयिकव्याप्तिघटकम्, तादृशगुरुधर्मावच्छिन्न साध्यकानुमानस्य केवलान्वयिसाध्यकपरामर्शीलतावादिनस्तु स्वरूपसम्बन्ध रूपावच्छिन्नत्वमेव व्याप्तिशरीरे निवेशयन्तीति समास ॥ . *

## इति पञ्चलक्षणी समाप्ता ।

## नापि साध्यसामानाधिकरण्यानाधिकरणत्वम्,

नापी ति । साध्यमसमानाधिकरणं यस्य, यदधिकरणानधिकरणं साध्यं तत्त्वम् साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम् ,

साध्यासामानाधिकरण्यानधिकरणत्वलक्षणे यदि तदधिकरणावृत्तित्व रूपासामानाधिकरण्यं निवेश्यते, तदा "द्रव्यं सत्त्वा दित्यादावतिव्याप्ति, सत्ताया द्रव्यत्वाधिकरणवृत्तितया तादृशासामानाधिकरण्यानधिकरणत्वात् । तदनधिकरणवृत्तित्वस्यासामानाधिकरण्यपदार्थत्वे अनन्तरवक्ष्यमाणलक्षणाभेद इत्यतो व्याचष्ट- साध्य मिति । असमानाधिकरणं यस्ये त्यत्र असमानाधिकरणपदस्य स्वानधिकरणाधिकरणार्थकत्वे "द्रव्यं सत्त्वा" दित्यादावतिव्याप्ति, द्रव्यत्वादे स्सत्तानधिकरणाधिकरणकत्वविरहेण यत्पदेन सत्त्वादेरुपादानासम्भवात् । 'सत्तावान् द्रव्यत्वा" दित्यादावव्याप्तिश्च, सत्त्वादेर्द्रव्यत्वाद्यनधिकरणाधिकरणकत्वात् । अत तदधिकरणानधिकरणपरतया तत्पदं व्याचष्टे — यदधिकरणे ति । यदधिकरणानधिकरणं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वे व्याप्तेर्विशिष्टैकार्थरूपतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्वाह, यत्त्वतत्त्वाननुगमेन तत्त्वाधिकरणत्वाभावकूटस्य निवेशनीयतया गौरवञ्चेत्याशयेन यत्त्वतत्त्वाघटित साध्यासामानाधिकरण्यपदार्थमाह- साध्यनिष्ठे ति । साध्यनिष्ठ यदसामानाधिकरण्यं स्वाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तित्वाभाव तत्प्रतियोगित्वञ्च तत्प्रतियोगिकोटिनिविष्टाधिकरणवृत्तित्वम् , साध्यनिष्ठाभावीयाधेयत्वनिष्ठप्रतियोगिताया निरूपितत्वसम्बन्धेन यदवच्छेदकं तद्वृत्तित्वमिति यावत् । "वह्निमान् धूमा" दित्यादौ साध्यनिष्ठाभावो ह्रदाधेयत्वाभाव, तदीयप्रतियोगितायामुक्तसम्बन्धेन अवच्छेदको ह्रदादि, तद्वृत्तित्वानधिकरणत्वं धूमादा विति लक्षणसमन्वय ।

[दी]साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमितियावत् , तदनाधिकरणत्वमित्यर्थ । साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वा

---

अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्व साध्यतावच्छेदकसम्बन्धावच्छिन्न ग्राह्यम् , अन्यथा ' वह्निमान् धूमा " दित्यादौ पर्वतादिसमवेतत्वाद्यभावमादायाऽनुपपत्ते । तथाच "सत्तावान् समवायित्वा" दित्यादौ साध्यनिष्ठाभावीयसमवेतत्वनिष्ठप्रतियोगितावच्छेदकीभूताधिकरणाप्रसिध्या - अव्याप्तिः, ' वह्निमान् धूमा " दित्यादावपि धूमादेरयोगोळकीयवह्न्यादिनिष्ठपर्वतादिवृत्तित्वाभावप्रतियोगितावच्छेदकपर्वतादिवृत्तित्वादव्याप्तिश्च । साध्यतावच्छेदकव्यापकीभूताभावनिवेशे च गौरवमित्याशयेन फलितार्थमाह— साध्यनिष्ठाधेयत्वे ति । अनिरूपकत्वमिह साध्यनिष्ठाधेयतात्वावच्छेदेन विवक्षणीयम् तेन ' वह्निमान् धूमा दित्यादौ महानसादे पर्वतीयवह्निनिष्ठाधेयत्वानिरूपकत्वेपि नाव्याप्ति ।

एव साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाऽऽधेयता निवेशनीया, तेन " आयमात्मा आत्ममहाकालान्यतरत्वा ' दित्यादौ कालस्य कालिकसम्बन्धावच्छिन्नात्मत्वनिष्ठाधेयतानिरूपकत्वेपि नातिव्याप्ति । तादृशाऽऽधेयत्वानिरूपके त्वत्राधिकरणत्वमविवक्षितम्, तदनिरूपकत्वमात्र निविष्टम् । प्रथमतो " द्रव्य सत्त्वा " दित्यादावतिव्याप्तेराशङ्कितत्तया व्याभिचारिसामान्यएवातिव्याप्तिमुद्धरति— साध्यवद्भिन्नस्ये ति । व्यभिचारानिरूपकाधिकरणस्येत्यर्थ । अत्राधिकरणवृत्तित्व हेतुतावच्छेदकसम्बन्धेन वाच्यम् , अन्यथा " वह्निमान् धूमा " दित्यादौ साध्यनिष्ठाधेयत्वानिरूपकस्वावयवादौ धूमादे स्सामवायेन वृत्तेरव्याप्त्यापत्ते । इत्थञ्च " सत्तावान् द्रव्यत्वा " दित्यादावव्याप्ति , साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धात्मकसमवायादिना वृत्तेरप्रसिद्धे

अथ सिंहव्याघ्रलक्षणे ।

# नापि साध्यसामानाधिकरण्यानाधिकरणत्वम्,

नापी ति । साध्यमसमानाधिकरण यस्य, यदधिकरणानधिकरण साध्य तत्वम् साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम्,

साध्यासामानाधिकरण्यानधिकरणत्वलक्षणे यदि तदधिकरणावृत्तित्व रूपासामानाधिकरण्य निवेश्यते, तदा "द्रव्य सत्त्वा दित्यादावतिव्याप्ति, सत्ताया द्रव्यत्वाधिकरणवृत्तितया तादृशासामानाधिकरण्यानधिकरणत्वात् । तदनधिकरणवृत्तित्वस्यासामानाधिकरण्यपदार्थत्वे अनन्तरवक्ष्यमाणलक्षणा भेद इत्यतो व्याचष्ट– साध्य मिति । असमानाधिकरणं यस्ये स्यत्र असमानाधिकरणपदस्य स्यानधिकरणाधिकरणार्थकत्वे "द्रव्यं सत्त्वा" दित्यादावतिव्याप्ति, द्रव्यत्वादे स्सत्ताद्यनधिकरणाधिकरणकत्वविरहेण य स्पदेन सत्वादिरुपादानासम्भवात् । "सत्तावान् द्रव्यत्वा" दित्यादाव व्याप्तिश्च, सत्त्वादेर्द्रव्यत्वाद्यनधिकरणाधिकरणत्वात् । अत तदधिकरणा नधिकरणपरतया तत्पद व्याचष्टे – यदधिकरणे ति । यदधिकरणा नधिकरण साध्य तत्त्वानधिकरणत्वस्य व्याप्तित्वे व्याप्तेर्निविशिष्टैकार्थ रूपतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्वाह, यत्तत्त्वाननु गमेन तत्त्वाधिकरणत्वाभावकूटस्य निवेशनीयतया गौरवञ्चेत्याशयेन यत्त्व तत्त्वाघटित साध्यासामानाधिकरण्यपदार्थमाह– साध्यनिष्ठे ति । साध्य निष्ठ यदसामानाधिकरण्य स्वाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तित्वाभाव स्तत्प्रतियोगित्वञ्च तत्प्रतियोगिकोटिनिविष्टाधिकरणवृत्तित्वम्, साध्यनिष्ठा भावीयाधेयत्वनिष्ठप्रतियोगितायां निरूपितत्वसम्बन्धेन यदवच्छेदक तद् वृत्तित्वमिति यावत् । "वह्निमान् धूमा" दित्यादौ साध्यनिष्ठाभावो ह्रदा धेयत्वाभाव, तदीयप्रतियोगितायामुक्तसम्बन्धेन अवच्छेदको ह्रदादि, तद्वृत्तित्वानधिकरणत्व धूमादाविति लक्षणसमन्वय ।

[दी]साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमितियावत् ; तदनधिकरणत्वमित्यर्थः । साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वा-

---

अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्, अन्यथा " वह्निमान् धूमा " दित्यादौ पर्वतादिसमवेतत्वाद्यभावमादायाऽनुपपत्तेः । तथाच "सत्तावान् समवायित्वा" दित्यादौ साध्यनिष्ठाभावीयसमवेतत्वनिष्ठप्रतियोगितावच्छेदकीभूताधिकरणाप्रसिध्या - अव्याप्तिः, " वह्निमान् धूमा " दित्यादावपि धूमादेरयोगोळकीयवह्न्यादिनिष्ठपर्वतादिवृत्तित्वाभावप्रतियोगितावच्छेदकपर्वतादिवृत्तित्वादव्याप्तिश्च । साध्यतावच्छेदकव्यापकीभूताभावनिवेशे च गौरवमित्याशयेन फलितार्थमाह-- **साध्यनिष्ठाधेयत्वे** ति । अनिरूपकत्वमिह साध्यनिष्ठाधेयतात्वावच्छेदेन विवक्षणीयम् . तेन " वह्निमान् धूमा दित्यादौ महानसादेः पर्वतीयवह्निनिष्ठाधेयत्वानिरूपकत्वेपि नाव्याप्तिः ।

एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाऽऽधेयता निवेशनीया, तेन " आयमात्मा आत्ममहाकालान्यतरत्वा " दित्यादौ कालस्य कालिकसम्बन्धावच्छिन्नात्मत्वनिष्ठाधेयतानिरूपकत्वेपि नातिव्याप्तिः । तादृशाऽऽधेयत्वानिरूपके त्वत्राधिकरणत्वमविवक्षितम्, तदनिरूपकत्वमात्रं निविष्टम् । प्रथमतो " द्रव्यं सत्त्वा " दित्यादावतिव्याप्तेराशङ्कितत्तया व्यभिचारिसामान्यएवातिव्याप्तिमुद्धरति-- **साध्यवद्भिन्नस्ये** ति । व्यभिचारानिरूपकाधिकरणस्येत्यर्थः । अत्राधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन वाच्यम्, अन्यथा " वह्निमान् धूमा " दित्यादौ साध्यनिष्ठाधेयत्वानिरूपकस्वावयवादौ धूमादे स्समवायेन वृत्तेरव्याप्त्यापत्तेः । इत्थञ्च " सत्तावान् द्रव्यत्वा " दित्यादावव्याप्तिः, साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धात्मकसमवायादिना वृत्तेरप्रसिद्धेः

[दी] तद्वृत्तौ नातिप्रसङ्गः । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्व व्यापकाभाव प्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्ष ।

---

एव " द्रव्य विशिष्टसत्त्वा " दित्यादावपि विशिष्टसत्तादे म्सत्ताघनाति रिक्ततया साध्यनिष्ठाधेयत्वानिरूपकाधिकरणगुणादिवृत्तित्वानधिकरणत्वा सम्भवात् अव्याप्तिरित्यतो निष्कृष्टार्थमाह— साध्यनिष्ठे ति। अत्रापि पूर्व दोषवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाऽऽधेयत्व निवेशनीयम्, एवमधिकरणत्वमप्यविवक्षितम् , तादृशाधेयत्वनिरूपकत्वव्यापकतैवाऽभावे निवेशनीया, तादृशाधेयत्वानिरूपकवृत्तित्वमात्रनिवेशे ' धूमवान् वह्ने " रित्यादौ वह्न्यधिकरणत्वसामान्याभावस्य धूमनिष्ठाधेयत्वानिरूपकह्रदादि वृत्तित्वादतिव्याप्तिरित्यतो व्यापकतानिवेश । व्यापकत्वञ्च तद्वन्निष्ठा न्योन्याभावप्रतियोगितावच्छेदकत्वम् , न तु तद्वन्निष्ठात्यन्ताभावप्रतियोगि त्वम् , सर्वस्यैव तथाविधद्वित्वावच्छिन्नाभावप्रतियोगितया तदप्रसिद्धे । न वा तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, तादृशाभाव प्रतियोगितानवच्छेदकीभूताभावत्वादिक मादाय वह्न्यधिकरणत्वसामान्या- भावस्यापि धूमानधिकरणत्वव्यापकतया ऽतिव्याप्त्यापत्ते । अनवच्छेद कत्वञ्चावच्छेदकतापर्याप्त्यनधिकरणत्वम्, अत उभयवद्भेदमादाय न दोष । अथवा यदधिकरणतासामान्याभावत्व साध्यनिष्ठाधेयत्वानिरूपक वृत्त्यत्यन्ताभावप्रतियोगितावच्छेदक तत्त्वमेव समुदायार्थ , अतोऽभाव त्वादिना व्यापकत्वमादाय न दोष ।

अधिकरणता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, तेन " वह्निमान् धूम " दित्यादौ वह्न्यनधिकरणधूमावयवादौ धूमाधिक रणत्वसामान्याभावसत्त्वेऽपि न क्षति । " धूमवान् वह्ने " रित्यादौ यत्किंचिद्वह्न्यधिकरणत्वाभावस्य धूमानधिकरणव्यापकतया अतिव्याप्ति

# साध्यवैयधिकरण्यानधिकरणत्वं वा,

तेन "सत्तावान् द्रव्यत्वा" दित्यादौ न दोष । साध्यवैयधिकरण्यम् साध्यवद्भिन्नाधिकरणत्वम् ।

धारणाय सामान्यपदम्, तथाच तादृशाधेयत्वानिरूपकत्वव्यापकाभावप्रतियोगितावच्छेदक यद्रूपावच्छिन्नाधिकरणतात्व यद्रूपावच्छिन्नाधिकरणतात्वावच्छिन्नाभावत्व वा तादृशाधेयत्वानिरूपकत्वव्यापकतावच्छेदक तद्रूपवत्वमिति फलितार्थ । तेन धूमानाधिकरणत्वव्यापकीभूतवह्न्यधिकरणत्वधूमाधिकरणत्वोभयसामान्याभावप्रतियोगिताया वह्न्यधिकरणत्वसामान्यनिष्ठत्वेपि नातिव्याप्ति । यदाधिकरणतामात्रनिवेशे "द्रव्य विशिष्ट सत्वा" दित्यादावव्याप्ति, द्रव्यत्वाधिकरणगुणादौ हेत्वधिकरणतात्वावच्छिन्नाभावासत्वात्, अतो यद्रूपावच्छिन्ने ति । हेत्वभावस्य व्यापकतानिवेशे व्यापकताशरीरे हेतुतावच्छेदकसम्बन्धेन तद्वन्निष्ठत्व निवेश्यम्, अन्यथा "वह्निमान् धूमा" दित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे ह्रदादौ धूमात्मकाभावस्य कालिकसम्बन्धेन वृत्ते रव्याप्त्यापत्ते, तथासति "सत्तावान् द्रव्यत्वा" दित्यादावव्याप्ति, साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धे, अतो हेत्वधिकरणत्वाभावस्य व्यापकताघटितमेव लक्षण कृतम्, तथाचाधिकरणताया विशेषणताविशेषेण वृत्तिमत्तया तेन सम्बन्धेन तद्वन्निष्ठत्व निवेश्यम्, अतो न दोष ।

पूर्वकल्पपरित्यागे बीजमाह– तेने ति । न दोष इति । सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धावपि सत्सम्बन्धावच्छिन्नाया द्रव्यत्वाधिकरणताया द्रव्ये प्रसिद्धाया अभावस्य साध्याधिकरणत्वव्यापकत्वादिति भाव ।

# तदुभयमपि साध्यानधिकरणानाधिकरणत्वं

चरमाधिकरणत्वांशस्या ऽनतिप्रयोजनकतया तमपहाय द्वयमेकोक्त्या ऽनूद्य दूषयति-- तदुभयमपी ति । साध्ये त्यादे साध्य यदधि करणानधिकरणं तत्त्वाभाव ,

---

साध्यवैयधिकरण्यस्य निरुक्तार्थकत्वे पौनरुक्त्यमतस्तद्व्याचष्टे— साध्ये ति । ननु मूले तदुभयमपि साध्यानधिकरणानाधिकरणत्व मित्यनेनोक्तलक्षणद्वयानुवादो ऽसङ्गत , असामानाधिकरण्यवैयधिकरण्ययो राधिकरणताद्वयघटितत्वेन तादृशलक्षणयो रधिकरणतात्रयघटितत्वानुवादेच अधिकरणताद्वयमात्रस्य निवेशादित्यतो मूलं सङ्गमयति— चरमाधि- करणत्वांशस्ये ति । अनतिप्रयोजनकतये ति । अनधिकरणत्वस्याधिकर- णत्वाभावरूपतया तद्घटकाधिकरणत्वांश परित्यज्य साध्यासामानाधि- करण्याभावसाध्यवैयधिकरण्याभावनिवेशेनैवोपपत्तेरिति भाव । असामा नाधिकरण्याद्यधिकरणत्वाभावस्याखण्डस्यासामानाधिकरण्याद्यभावाघटितत्तया न वैयर्थ्यमि त्यनतिप्रयोजनकतये त्युक्तम् । तदपहाय — चरमाधि करणत्वांश परित्यज्य । द्वयम्— साध्यासामानाधिकरण्याभाव साध्यवैयधि- करण्याभावरूपनिष्कृष्टलक्षणार्थद्वयम् । साध्यानधिकरणानधिकरणत्व मित्यनेन " सत्तावान् द्रव्यत्वा " दित्यादावव्याप्तिवारणाय विवक्षितस्य प्रथमलक्षणनिष्कृष्टार्थस्य कथञ्चिदपि प्रतिपादनासम्भवात्तदनुवादकता ऽनुप पन्नेति यथाश्रुतार्थानुवादपरतया सङ्गमयितु मनुवदनीयलक्षणार्थद्वयमाह - साध्येत्यादे रिति । लक्षणद्वयस्य " क्रमेणे " ति शेषः । तत्त्वाभाव इत्यन्तेन प्रथमलक्षणार्थकथनम् ; एवञ्च साध्याधिकरणा नधिकरणशब्देन साध्य यदधिकरणानाधिकरणकं तद्बोध्यते; तदुत्तरत्व प्रत्ययेन तत्त्वं साध्यपदोत्तरसाविविष्टनञा तदभाव प्रत्याय्यतइति प्रथम लक्षणार्थबोधकत्व साध्यानधिकरणानधिकरणत्व मित्यस्य । नच

साध्याधिकरणानधिकरणत्वपदेन नञ्समासे सत्येव तदर्थाभावो नञा प्रत्याययितु शक्यते, तथाच सामानपदोत्तरनञ्निपातो ऽसम्भवी, समन्य मानपूर्वनिपतितस्यैव नञस्साधुत्वात्, अन्यथा 'अचित्रगु' रित्यादा चित्रादि पदोत्तरमपि नञ्निपातापत्तेरिति वाच्यम्,— ससम्बन्धिकार्थबोधकोत्तर पदघटितसमुदायेन सम नञ्समासस्थले नञो मध्यनिवेशस्यापि सा॰ धुत्वसम्पादकत्वात्, अन्यथा "घटानधिकरणत्व साध्याभाववदवृत्तित्व" मित्यादौ घटाधिकरणत्वाभावसाध्याभाववदवृत्तित्वाभावप्रत्ययानुपपत्ते । न हि तत्रानधिकरणत्वादिपदाना घटादिपदैस्समासे तादृशार्थप्रतीति रुप पद्यते, अनधिकरणत्वपदादिजन्यप्रतीतिविशेष्यीभूताभावेन सममेव घटादि समर्गभानात्, समस्यमानपदप्रतिपाद्यतावच्छेदककोटिनिविष्टेनापरपदार्था॰ न्वये राजपुरुषादन्यहरत्वे "राजा पुरुष" इत्यादिसमासापत्ते । एव नञा अन्वयितावच्छेदकावच्छिन्नाभावस्यैव बोधनादधिकरणसामान्यभेदवा नेवानधिकरणपदार्थस्स्यात्, तस्यचाप्रसिद्ध्या नञ्पदाधिकरणपदयो प्राथ मिकसमासासम्भवाच्चेति ।

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूप प्रथमलक्षणस्य निष्कृष्टयथाश्रुतार्थोपि साध्यानधिकरणानाधिकरणत्वशब्देन प्रतिपाद्यते । तथाहि— आधेयतानिरूपकार्थकचरमाधिकरणपदघटितेन अधिकरणा नधिकरणपदेन अधिकरणमनधिकरण आधेयत्वानिरूपकयस्येति व्युत्पत्त्या अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकनिरूपकताघेयतावत्त्वेना ऽन्यपदार्थो बोध्यते, बहुव्रीहौ विग्रहवाक्यादृशविशेषणविशेष्यभावापन्नस्य बोध तद्विपरीतविशेषणविशेष्यभावापन्नस्य समासेन प्रत्ययात् । "चित्रा गौर्यस्य" ति विग्रहवाक्यात् यत्पदार्थसम्बन्धित्वेन चित्रगो "चित्र गु" रित्यत चित्रगोनिष्ठसम्बन्धप्रतियोगित्वेन यत्पदार्थस्य बोधात्, प्रकृतस्थले च विग्रहवाक्यादन्यपदार्थनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेद

# तच्च तत्र यत्किंचित्साध्यानधिकरणाधिकरणे धूमेचाप्रसिद्धम् ॥

---

साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः । तत्र- केवलान्वयिनि । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाऽप्रसिध्या

---

घस्त्वेनाधिकरणमतीते. । एवञ्च साध्य यस्याधिकरणानधिकरण यदधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूतनिरूपकताकाधेयसान्वितिति व्युत्पत्त्या साध्यनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवदधिकरणवृत्तित्व साध्याधिकरणानधिकरणत्वशब्देन प्रत्याय्यते, तदभावस्साध्यपदोत्तरनञ्पदघटिततद्वाक्येनेति ।

द्वितीयलक्षणार्थमाह– साध्यस्येति । तथाच साध्यानधिकरणमधिकरणं आधेयतानिरूपक यस्येति व्युत्पत्त्या साध्यानधिकरणाधिकरणत्वशब्देन साध्यानधिकरणवृत्तित्वं प्रत्याय्यते, तदभावो द्वितीयनञेति उक्तशब्दस्य एतदर्थानुवादकतेति भाव. ।

पूरणसंवलित तत्रे ति ग्रन्थ व्याचष्टे— तत्रे त्यादिना । मूले केवलान्वयिनि "वह्निमान् धूमा" दित्यादौचाव्याप्तौ हेत्वकथनात् प्रथम लक्षणे केवलान्वयिन्यव्याप्तिहेतुं पूरयति— साध्ये त्यादिना अप्रसिध्येत्यन्तेन । साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनिवेशाभिप्रायेण इयमप्रसिद्धि रभिहिता, यत्किञ्चिन्निरूपकभेदनिवेशे च तादृशभेदवदधिकरणे हतोर्वृत्ते रव्याप्तिर्बोध्या । वक्ष्यमाणक्रमेण नानाव्यक्तिसाध्यकहेत्वन्तरेऽप्यव्याप्तिसत्त्वात् धूममात्रे तत्कथन मूलकृतो न्यूनतासम्पादकम् , अतो

[दी]नानाव्यक्तिसाध्यकेचैकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः, क्वचिद्व्यभिचारिण्यतिव्याप्तिश्चाऽऽद्ये; द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितः, तदा

---

धूम इत्यस्य उपलक्षणत्वाभिप्रायेण पाठमधृत्वैव व्याचष्टे— **नानाव्यक्ती**-**के**ति । अत्र च यथासम्भव मव्याप्तिर्बोध्या; तेन " एतद्वृत्तियावद्धर्मवानेतत्त्वा " दित्यादौ वक्ष्यमाणरीत्या ऽव्याप्तिविरहेपि न क्षतिः । अतएवा ऽग्रे **नानाधिकरणके सर्वत्रे** ति वक्ष्यति । यद्वा **नानाव्यक्ति साध्यक** इत्यस्य मिथो व्याधिकरणद्वयवृत्तिसाध्यतावच्छेदकक इत्यर्थः । अत्राव्याप्तौ हेतुं पूरयति— **एके** त्यादिना इती त्यन्तेन । अनया रीत्या अव्याप्तिश्च यत्किञ्चित्साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नभेदनिवेशाभिप्रायेण ; साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनिवेशे च केवलान्वयिन्यव्याप्तेरेव दोष इति ध्येयम् ।

**क्वचि** दिति । " पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् द्रव्यत्वा " दित्यादौ । **अतिव्याप्ति** रिति । विशिष्टद्रव्यत्वस्य द्रव्यत्वानतिरेकितया पृथिव्यादे स्साध्यनिष्ठाधेयत्वानिरूपकत्वासम्भवादिति भावः । आधेयतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशे नैष दोषः, अधिकरणतानिरूपकतावच्छेदकस्यैवाऽऽधेयतावच्छेदकतथा पृथिवीनिष्ठाधिकरणतानिरूपकतानवच्छेदकपृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वादेः पृथिवी निरूपिताधेयताऽनवच्छेदकत्वादिति भाव ।

द्वितीयलक्षणे साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदनिवेशे धूमादौ नाव्याप्तिः, अनस्तत्कल्पे केवलान्वयिसाध्यकाव्याप्तिरेव, यत्किञ्चित्साध्यवद्व्यक्तिभेदनिवेशे च उभयस्थलएवाव्याप्तिरिति मूलाभिप्रायं स्फुटयति— **द्वितीयेचे** त्यादिना । **साध्यवत्त्वावच्छिन्नप्रतियोगिताक-भेदः साध्यवैयधिकरण्ये विवक्षितः**— साध्यवैयधिकरण्यघटकतया

[दी] केवलान्वयिनि, यदि यत्किञ्चित्साध्यव्यक्तिभेदो विवक्षितः तदा नानाधिकरणसाध्यके सर्वत्राऽव्याप्तिः ॥

---

विवक्षित इत्यर्थः । केवलान्वयिनि— केवलान्वयिन्येव । नानाधिकरणके ति । एकव्यक्तिसाध्यकेपि " सत्तावान् द्रव्यत्वा " दित्यादौ एकस्य साध्यवतो भेदस्य अन्यस्मिन् साध्यवति सत्त्वादव्याप्तेः, नानाव्यक्ति-साध्यकेपि " एतद्वृत्तियावद्धर्मवान् एतत्त्वा " दित्यादौ अव्याप्त्य सम्भवाच्च " नानाव्यक्तिकेति " नोक्तम् ; तथाच द्वितीयलक्षणाभि प्रायेण धूम इति मूलं नानाधिकरणसाध्यकसामान्योपलक्षकमिति भावः ।

## इति सिंहव्याघ्रलक्षणे समाप्ते ।

## अथ सार्वभौमपरिष्कारः ।

[दी] केचित्तु,– साध्ये ति । साध्यासामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वस्याभाव तदधिकरणभिन्नत्वमर्थ,

---

सध्यासामानाधिकरण्यानधिकरणत्व मित्यत्र साध्यासामानाधिकरण्यपदेन साध्याधिकरणवृत्तित्वाभावविवक्षणेपि "द्रव्य सत्त्वा" दित्यदावतिव्याप्ति र्नसम्भवति, सामानाधिकरण्यस्याऽव्याप्यवृत्तितया सत्तादावपि गुणाद्यवच्छेदेन द्रव्यत्वादिसामानाधिकरण्याभावसत्त्वात् ; किन्तु "वह्निमान् धूमा" दित्यादावव्याप्ति, स्वावयवाद्यवच्छेदेन धूमादावपि वह्न्यादिसामानाधिकरण्याभावसत्त्वात्, सापि हेतुतावच्छेदकसम्बन्धेन यद्धेतुमत् तदवच्छिन्नत्वेनाऽभाव विशेष्य वारयितु शक्यतइत्यभिप्रायेण तत्पद तादृशाभावपरतया वर्णयत सार्वभौमस्य मतमुपन्यस्यति—केचित्त्वि ति ।

हेत्वधिकरण इति । सप्तम्यर्थो ऽभावान्वय्यवच्छिन्नत्वम् । तेनैव सम्बन्धेने ति तृतीयार्थोपि वृत्त्यन्वितमवच्छिन्नत्वम्, वृत्तिपदस्य सम्बद्धार्थकत्वे तु अभेदएव तदर्थ । अनधिकरणत्वपदस्य अधिकरणत्वाभाव अभावमात्र वा यद्यर्थस्यात् तदा अव्याप्यवृत्त्यधिकरणताया अव्याप्यवृत्तितया सत्तादौ द्रव्याद्यवच्छेदेन साध्यसामानाधिकरण्याभावाधिकरणत्वाभावस्य सामानाधिकरण्यरूपतया तदभावस्यचाऽसत्तत्वा दतिव्याप्ति स्तदवस्थैवेत्यनधिकरणपद मधिकरणभेदवदर्थकतया व्याकरोति–तदधिकरणभिन्नत्व मिति । यद्यपि अधिकरणभेदेनाऽभावभेदाभावात् सयोगादिना धूमाद्यधिकरणपर्वताद्यवच्छिन्नो य स्सम्बन्धान्तरेण तद्वृत्तिरूपादिनिष्ठवह्निमत्संयुक्तत्वाद्यभाव तस्यैव स्वावयवाद्यवच्छेदेन धूमादौ वर्तमानतया धूमादेस्तादृशाभावानधिकरणत्व दुर्घटम्, तथापि तादृश

[टी] तेन धूमस्य स्वावयवे संयोगेन

---

हेत्वधिकरणावच्छिन्नत्वविशिष्टाभावानधिकरणत्वस्यैव विवक्षणीयतया न दोष ; " रूपे पर्वते न वह्निमत्संयुक्तत्व " मिति प्रतीतिवत् " पर्वते धूमे न वह्निमत्संयुक्तत्व " मिति प्रतीत्यनुदयात् पर्वतावच्छिन्नत्वविशिष्टे निरूपितायां वह्निमत्संयुक्तत्वाभावीयविलक्षणाधिकरणताया रूपादावेवो पगमात् । अभावाधिकरणतायामेवचाऽधिकरणविशेषावच्छिन्नत्वं निवेश नीयम्, तावतापि धूमरूपयो अभिन्नसाध्याभावस्य परस्परानवच्छेदका वच्छिन्नाधिकरणताभेदेन कथितदोषनिराकरणसम्भवात् ।

उभयत्र हेतुतावच्छेदकसम्बन्धप्रवेशप्रयोजनं क्रमेण दर्शयति— तेने ति । स्वावयवे संयोगेनावृत्तावपी त्यन्वय । तथाच स्वावयवा द्यवच्छेदेन साध्यवत्संयुक्तत्वासत्त्वेन तदभावस्याऽक्षततया प्रथमतो हेतुता वच्छेदकसम्बन्धानिवेशे स्वावयवरूपस्वाधिकरणावच्छिन्नसाध्यवत्संयुक्तत्वा भावानधिकरणत्वविरहेण संयोगेन धूमहेतौ कस्यापि साध्यस्य यदाप्ति र्नस्यादिति भाव । यद्यपि तादृशसम्बन्धनिवेशेपि वह्निमत्संयुक्तत्वादे कालिकाव्याप्यवृत्तितया धूमादावुत्पत्तिकालावच्छेदेन वह्निमत्संयुक्तत्वाभाव वृत्ते पर्वतादेरपि कालोपाधितया तादृशाभावावच्छेदकत्वादव्याप्तितादव- स्थ्यम्, तथापि ' इदानी " मिति प्रतीतिनियामककालस्यावच्छेदक- त्वात् " इहे " ति प्रतीतिनियामकदेशनिष्ठावच्छेदकताया वैलक्षण्य दुरपह्नवम्, यदभावात् " पर्वते धूमे न वह्निमत्संयुक्तत्व " मिति प्रत्ययाभाव हेतुमन्निष्ठतादृशावच्छेदकतानिरूपकत्वमेव निवेश्यम्. अतो न दोष । नच कालोपाधेरवच्छेदकताया मवच्छेद्याधिकरणेनाऽनवच्छे दकस्य कालिकसम्बन्धो नियामक, इत्यत्र तादृशसम्बन्धानवच्छिन्नत्वनेव देशस्यावच्छेदकताया वैलक्षण्यम्, अन्यस्य दुर्वचत्वात्, तथाच व्यभि चारिणि कालिकादिसम्बन्धेन हेतौ वर्तमाने साध्यसामानाधिकरण्याभावे

[दी] वह्निमति च

व्यभिचारनिरूपकाधिकरणीयावच्छेदकताया कालिकसम्बन्धानवच्छिन्नत्व विरहादतिव्याप्तिरिति वाच्यम्,— कालिकाव्याप्यवृत्तावपि कालिकसम्बन्धघटितात्मत्वाकाशत्वादिसामानाधिकरण्ये दैशिकसम्बन्धेनात्मत्वाद्यनधिकरणकालस्य देशविधयैवावच्छेदकत्वात्, कालविधया तस्यावच्छेदकत्वे तादृश सामानाधिकरण्यस्य कालिकाव्याप्यवृत्तितापत्ते, कालिकसम्बन्धानवच्छिन्नत्वादन्यस्यैव वैलक्षण्यस्य देशविधयावच्छेदकताया स्वीकरणीयत्वात् ।

हेत्वधिकरण इत्यत्र हेतुपद अधिकरणभिन्नत्वानुयोगितत्तद्धेतुपरम् अतो धूमाद्यन्तरसयुक्तस्वावयवावच्छेदेन धूमादेस्तादृशाभाववत्त्वेपि न क्षति । एवञ्च व्याप्ते प्रतिधूमादिक भिन्नत्वेपि केनापि रूपेणाऽनुगतानातासा धूमत्वादिकमवच्छेदकम् ।

यत्तु,—हेतुपद हेतुतावच्छेदकावच्छिन्नपरमेव हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरण तदनवच्छिन्ना या या अधिकरणता तदन्यत्वेन साध्यसामानाधिकरण्याभावाधिकरणताया विशेषणीयत्वान्नोक्तदोष, नवाऽननुगम, एवञ्च कालोपाधिविधया हेत्वधिकरणस्य देशस्यावच्छेदकत्वेनोक्तदोषस्य हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकत्वनिवेशे नापि वारणसम्भव, पर्वतरूपादौ हेतुतावच्छेदकसम्बन्धावच्छिन्नपर्वतादिनिष्ठावच्छेदकताकसाध्यसामानाधिकरण्याभाववत्त्वाप्रसिद्धावपि रूपादिनिष्ठनिरुक्ताधिकरणताया धूमादिप्रसिद्धनिरुक्ताधिकरणताना भेदस्याऽक्षतया तद्वदन्यत्वेन धूमादौ लक्षणसमन्वयादिति, तन्नसाधु,— तथासति किञ्चे त्याद्यग्रिमदोषासङ्गते, गगननिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतायाएव उक्ताधिकरणताभिन्नाया प्रसिद्धे ।

वह्निमतिचेति । तथाच तेनैव सम्बन्धेनेत्यनुक्त्वा यत्किञ्चित्सम्बन्धेनेत्युक्तौ पर्वतावच्छिन्नवह्निमत्सयुक्तत्ववत्यपि तदवच्छिन्न

[दी] समवायेनावृत्तावपि न क्षतिः ।

वह्निमत्समवेतत्वाभावसत्त्वात् धूमस्य वह्निव्याप्यत्वं नोपपद्यतइति भावः । साध्यवत्सम्बद्धत्वसामान्याभावनिवेशे वह्निमत्समवेतत्वाभावस्य लक्षणाघटकत्वेपि हेत्वधिकरणविशेषावच्छिन्नसाध्यवत्सम्बद्धत्वसामान्याभावस्याऽप्रसिद्ध्या असम्भवो बोध्यः, साध्यवदसम्बद्धस्य हेतुमति सम्बन्धासम्भवात् अवच्छेद्याधिकरणसम्बन्धिनएव अवच्छेदकतया तन्निष्ठाभावे हेतुमतोऽनवच्छेदकत्वात् । नक्षतिरिति । नाव्याप्तिर्नासम्भवश्चेत्यर्थः । साध्यवत्ता च साध्यतावच्छेदकसम्बन्धेन बोध्या, तेन समवायेन वह्नौ साध्ये संयोगेन धूमे हेतौ पर्वताद्यवच्छिन्नवह्निमद्वृत्तित्वसामान्याभावासत्त्वेपि नातिव्याप्तिः ; न वा सद्धेतावपि यत्किञ्चित्सम्बन्धेन यत्साध्यवान् तद्वृत्तित्वाभावस्य स्वाधिकरणावच्छेदेन सत्त्वेपि दोषः ।

साध्यवत्त्वञ्चोपलक्षणविधया ऽभावप्रतियोगितावच्छेदककोटौ निवेशनीयम्, न तु विशेषणविधया; तेनोत्पत्तिक्षणावच्छिन्नघटादौ गन्धाद्यसत्त्वात्तादृशघटाद्यवच्छेदेन पृथिवीत्वादौ गन्धादिविशिष्टवृत्तित्वाभावसत्त्वेपि "गन्धवान् पृथिवीत्वात्" इत्यादौ, मूलावच्छिन्नवृक्षादौ कपिसंयोगाद्यसत्त्वात् तादृशवृक्षाद्यवच्छेदेन एतद्वृक्षत्वादौ कपिसंयोगादिविशिष्टवृत्तित्वाभावसत्त्वेपि "कपिसंयोगी एतद्वृक्षत्वा" दित्यादौ वा नाव्याप्तिः; तत्तत्कालदेशावच्छिन्नतत्तदधिकरणावच्छेदेनापि तत्र तत्र हेतौ तादृशसाध्योपलक्षितधर्मिवृत्तित्वसत्त्वात । नचैवमपि धूमादौ पर्वतवृत्तेरनवच्छेदको यो देशः कालो वा तदवच्छिन्नपर्वताद्यवच्छेदेन वह्न्यादिमद्वृत्तित्वाभावस्य धूमादौ सत्त्वादव्याप्तिर्दुर्वारैवेति वाच्यम्;— तद्देशकालावच्छिन्नपर्वतादेर्धूमाद्यसम्बन्धितया धूमादावप्यनवृत्तावपि तादृशत्वावच्छेदकत्वात् । नचैवं "उत्पत्तिक्षणविशिष्टपर्वते धूमस्य न वह्निमत्संयुक्तत्व" मित्यादिप्रतीत्यनुपपत्तिः; "द्रव्यत्वे गुणे न पृथिवीत्व

[दी] तादृशाभावस्य सम्बन्धान्तरेण वर्तमाने

सामानाधिकरण्य " मित्यादिप्रतीतिघटकप्रतीते स्सामानाधिकरण्यावच्छेद कत्वाभावावलम्बनता न सम्भवति, विशेष्यस्यावच्छेदकत्वे विशिष्टस्यावच्छे दकत्वासम्भवात् इतिवाच्यम् , तादृशप्रतीतीनां सामानाधिकरण्ये विशिष्ट पर्वतावच्छेद्यत्वाभावावगाहितयैवोपपत्ते । ' उत्पत्तिक्षणे पर्वते धूमस्य न वह्निमत्संयुक्तत्व " मित्यादौ पर्वतावच्छिन्न यत् धूमस्य वह्निमत्संयुक्तत्व तस्योत्पत्तिक्षणो नावच्छेदक इत्यादिरप्यर्थ सम्भवति, धूमनिष्ठवह्निम त्संयुक्तत्वाभावे उत्पत्तिक्षणपर्वताभयावच्छिन्नत्व तु नार्थ , पर्वतस्य प्रतियो ग्यवच्छेदकतया तदन्तर्भावेण द्वयोरभावावच्छेदकत्वस्यासम्भवात् , घट पटयो र्घटत्वाभावाधिकरणतावत्, एतेन उक्तोभयावच्छिन्नसाध्यसामानाधिकर ण्याभावव्यावर्तनाय हेत्वधिकरणमात्रावच्छिन्नत्वप्रवेशन केषाञ्चिदनुपादेयमेव; तथासति वह्न्यादिनिष्ठधूमसामानाधिकरण्याभावस्याप्ययोगोलकस्यावयवो भयावच्छिन्नतया हेतुतावच्छेदकसम्बन्धेन हेतुमन्मात्रानवच्छेद्यतया अति व्याप्तिप्रसङ्गाच्च ।

केचित्तु,- विशिष्टपर्वतादे रवच्छेदकतामादाया ऽव्याप्तिवारणाया वच्छेदकान्तरानवच्छिन्नहेत्वधिकरणावच्छिन्नत्व मभावे निवेशनीयम् , एवञ्च पर्वतादे कालविधया धूमनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वस्यापि व्यावृत्ति , पर्वतादे स्स्थूलकालतया वह्निमत्संयुक्तत्वादिरूपप्रतियोगिनो प्यवच्छेदकत्वात् तन्निष्ठाभावावच्छेदकताया अविरोधाया ऽवान्तरकालाव च्छिन्नत्वोपगमात् इत्याहु ।

हेतुमदसम्बद्धे साध्यसामानाधिकरण्याभावस्योक्तयुक्त्या हेत्वधिकरणा वच्छिन्नत्वविरहात् हेतुतानवच्छेदकसम्बन्धेन हेतुमत्सम्बद्धे हेतुमद वच्छिन्नतादृशाभावप्रसिद्धिमाह— तादृशे ति । हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वस्य तेनैव सम्बन्धेन हेतुमदवच्छिन्नाभावश्चेत्यर्थ ।

[दी] तत्रैव सुलभ ।

---

तर्ग:— तादृशहेतुमत्येव । नच तथापिरूपादौ वह्निमत्संयुक्तत्वाभावो व्याप्यवृत्तिरेवेति तत्राधिकरणविशेषस्यावच्छेदकत्व निर्युक्तिकम्, प्रतियोगिमत्यभावत्तौव विरोधभञ्जनार्थमवच्छेदकभेदापेक्षणात्; धूमवत्कपालादिसमवेतएव वह्निमन्महानसादिसंयुक्तघटादौ महानसाद्यवच्छेदेन वह्निमत्संयुक्तत्वाति हेतुमत्कपालाद्यवच्छेदेन वह्निमत्संयुक्तत्वाभाव सौलभ्येपि " एतद्रूपवानेतद्रसा " दित्यादौ एतद्रूपादिमत्समवेतत्ववति हेत्वधिकरणावच्छेदेन प्रतियोगिसत्त्वात् तदवच्छेदेन साध्यसामानाधिकरण्याभावसत्त्वासम्भवात् एतद्रूपादिमति सम्बन्धान्तरमात्रेण वर्तमाने साध्यवत्समवेतत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणावच्छिन्नत्वविरहेण निरुक्ताभावाप्रसिद्धे दुर्वारत्वादिति वाच्यम्;- " पर्वते रूपे न वह्निमत्संयुक्तत्व " मिति प्रतीतिबलेन व्याप्यवृत्तेरपि सामानाधिकरण्याभावस्याधिकरणविशेषावच्छिन्नत्वोपगमात् ।

यत्तु,— व्याप्यवृत्तेरभावस्याधिकरणविशेषावच्छिन्नत्वानुपगमे हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनुयोगिकत्वहेत्वधिकरणविशेषावच्छिन्नत्वोभयाभावो विवक्षणीय, तथाच धूमादिनिष्ठस्वावयवाद्यवच्छिन्नतदधिकरणताया हेतुतावच्छेदकसम्बन्धेन हेतुमदवच्छिन्नत्वस्य रूपादिनिष्ठवह्निमत्संयुक्तत्वाद्यभावाधिकरणताया घटादिनिष्ठधूमवत्कपालाद्यवच्छिन्नतदधिकरणतायाश्च हेत्वनुयोगिकत्वस्याभावेन उभयाभावसत्त्वाल्लक्षणसमन्वयइति,—

तन्न,— व्याप्यवृत्ते रवच्छेदकानुपगमे " पृथिवी रूपात् " इत्यादावतिव्याप्तेः, पृथिवीत्वादिव्यभिचारिजलीयरूपादिनिष्ठसाध्यसामानाधिकरण्याभावस्य व्याप्यवृत्तितया तदधिकरणतासामान्ये निरुक्तोभयाभावस्याक्षतत्वात् ।

[दी] व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरणएव तादृशि तादृशाभाववत्त्वम्, "सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्य" मितिप्रतीतेः । नचैवं विशिष्टसत्त्वेऽव्याप्तिः,

---

अथ हेत्वधिकरणावच्छिन्नत्वस्थाने अनवच्छिन्नत्वहेत्वधिकरणानवच्छिन्नत्वोभयाभावस्यैव निवेशनीयत्वा नाय दोष, जलरूपादिनिष्ठपृथिवीसमवेतत्वाभावाधिकरणतायां अवच्छिन्नत्वविरहेणोभयाभावसत्त्वात्, एवं च तावतैव दर्शितासिद्धेरपि निवारितत्वात् तादृशोभयाभाववदधिकरणतावदन्यत्वमेव निवेशनीयम्. नतूक्ताधिकरणतासामान्ये हेत्वनुयोगिकत्वतादृशोभयाभाववत्त्वोभयाभाव, प्रयोजनविरहात्, इतिचेत् ? एवमपि वक्ष्यमाणाया· कालिकसम्बन्धेन हेतावव्याप्तेरसङ्गतिर्दुर्वारैव, तत्र कालिकसम्बन्धेनाऽवृत्तिगगनादावेव दर्शितोभयाभाववत्साध्यसामानाधिकरण्याभावाधिकरणताया· प्रसिद्धे; अवृत्तावेव सर्वत्र तादृशाभावप्रसिध्या सम्बन्धान्तरेणवर्तमानपर्यन्तानुधावनविरोधश्च ; तस्माद्व्याप्यवृत्तेरप्यवच्छेदकवत्त्वमेव ग्रन्थकाराभिमतमित्यवधेयम् ।

"द्रव्यं सत्त्वा" दित्यादावाशङ्कितामतिव्याप्तिमुद्धरति- **व्यभिचारिणश्चे** ति । **तादृशी** ति । हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः, अवच्छेदकत्व सप्तम्यर्थः ! तादृशाभाववत्त्वम्—हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभाववत्त्वम् । अत्र प्रमाणाकाङ्क्षायामाह— **सत्ताया मिति** । ईदृशप्रतीत्या द्रव्यत्वसामानाधिकरण्यवत्यामपि सत्तायां तदनवच्छेदकगुणाद्यवच्छेदेन तदभाववत्त्वावगाहनादिति भाव । एवम्— सत्ताया द्रव्यत्वसामानाधिकरण्याभावोपगमे । **विशिष्टसत्त्वे**— गुणाद्यन्यत्वविशिष्टसत्तान्यायवच्छिन्ने । **अव्याप्ति** रिति । गुणाद्यवच्छेदेन साध्य

[दी] विशिष्टस्यातिरिक्तत्वात् ।

---

सामानाधिकरण्याभाववति केनापि रूपेण तदनधिकरणत्वासम्भवादिति भावः । विशिष्टस्ये ति । तथाच विशिष्टसत्त्व द्रव्यमात्रवृत्ति, तद धिकरणत्वं न गुणादेरिति न हेत्वधिकरणावच्छेदेन हेतौ साध्यसामा नाधिकरण्याभाववत्त्वमिति भावः ।

यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छिन्नत्व निवेशयापीय मव्याप्ति श्शक्यते वारयितुम्, तथापि प्रकारान्तरेण वारणसम्भवे लक्षणे अधिकनिवेशनमनुचितमित्यभिप्रेत्य विशिष्टातिरिक्तत्वादिपक्ष आश्रित. । नच हेतुतावच्छेदकविशिष्टाधिकरणतानिवेशनमावश्यकम्, अन्यथा " इद स्पर्शवत् भूतत्वमूर्तत्वोभयस्मा " दित्यादौ भूतत्वे मूर्तत्वे च हेतौ स्वाधि करणे गगने मनसि च साध्यसामानाधिकरण्यविरहेणाव्याप्तिप्रसङ्गादिति वाच्यम् ; उभयत्वस्यैकविशिष्टापरत्वरूपतामवलम्ब्य विशिष्टस्यातिरिक्त तया तत्र स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेन उभयत्वस्यैव हेतुत्वमिति स्वीकृत्यैव वा तत्राऽव्याप्ते स्समाधानसम्भवात् । ननु " द्रव्यं गुणाद्यन्यत्वे सति सत्त्वा " दित्यादौ विशिष्टातिरिक्तत्वपक्षमवलम्ब्य अ- व्याप्तेर्वारणं न विचारसहम्, तथाहि,- गुणादिवृत्तिसत्तादितो गुणाद्यन्यत्व विशिष्टसत्तादे रतिरिक्तत्वे अनुगतधर्ममात्रोच्छेदः, एकव्यक्तिवृत्तित्वविशिष्ट स्याऽपरव्यक्तिवृत्त्यन्यत्वात् । नच तत्तद्व्यक्तिवृत्तित्वविशिष्टसत्तादीनां मिथो भेदेपि शुद्धसत्तादिकमनुगत निराबाधमेवेति वाच्यम्; शुद्ध सत्तादौ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे भवता तदेकत्वासम्भवात्, तदनभ्युपगमे तस्या अवृत्तित्वप्रसङ्गात् । एवं सर्वेषामेव वस्तूनां तत्त त्क्षणवृत्तित्वरूपविशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गवादपर्यवसानं दुर्वारमेव ।

[दी] अनतिरेके तु विशेषणविशेष्यसम्बन्धस्येव परम्परया

अथ प्रत्यभिज्ञाद्यनुरोधेन एकस्मिन्नानादेशकालवृत्तित्वविशिष्ट्य स्वीक्रियत एव, परन्तु "गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति," 'इदानीं पूर्वक्षणवृत्तित्वविशिष्टघटो नास्ती' ति प्रतीत्यनुरोधेन मिथो भिन्ना अपि तत्तद्विशेषणविशिष्टसत्त्वघटाद्य स्वीक्रियन्ते, तदवलम्बनतयैव तादृशमतीत्युपपत्ते द्रव्यवृत्तित्वादिवैशिष्ट्यपुरस्कारेणचानुगतसत्त्वादे न द्रव्यत्वानुमापकता स्वीक्रियते, अपि तु तदन्यतादृशविशेषणविशिष्टगुणाद्यवृत्तिवस्तुन एवेति तत्र द्रव्यत्वादिव्याप्तिविरहेऽपि न क्षति रितिचेन् 'तादृशवस्तुना केन रूपेण व्याप्यता', न द्रव्यवृत्तित्वादिविशिष्टत्वेन, तादृशधर्मस्याव्याप्यानुगतधर्मसाधारण्यात्, नापि तादृशविशेषणविशिष्टतद्व्यक्तित्वादिना, तादृशविशेषणवैशिष्ट्याशस्य व्यर्थत्वात् तद्व्यक्तित्वाद्यनुपस्थितावनुमानानिर्वाहाच्च। एवं 'विशिष्टसत्ता नास्ती' त्यत्र विशिष्टसत्तात्वावच्छिन्नाभावस्य न विषयतासम्भव, तद्रूपावलीढानुगतसत्ताव्यक्ति तद्रूपावच्छिन्नाभावासम्भवात्। नापि तद्व्यक्तित्वावच्छिन्नाभावस्य तद्व्यक्तित्वस्य प्रतियोगिकोटावनुल्लेखात्। विशेषणावच्छिन्नप्रतियोगिकस्सम्बन्धो विलक्षण, स च नानुगतसत्तायाम्सम्बन्ध, अपि तु तदतिरिक्तविशिष्टसत्ताया एवेति प्रतियोगितावच्छेदकधर्मस्य गुणादिवृत्तिसत्तासाधारण्येपि तत्र विशिष्टाभावोऽक्षत एव, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकसम्बन्धशून्यत्वमात्रस्य विशिष्टाभावसत्त्वे अपेक्षितत्वादिति चेत्'– तर्हि गुणादिसाधारणसत्ताया एव तादृशातिरिक्तसम्बन्धो गुणादिव्यावृत्त स्वीक्रियताम्, किं सम्बन्ध्यन्तरकल्पनेनेत्यभिप्रेत्याह— **अनतिरेके** त्विति। **विशेषणविशेष्यसम्बन्धस्येवे** ति। सत्तादिनिष्ठगुणाद्यन्यत्ववैशिष्ट्यस्येवेत्यर्थ। **परम्परया**— परम्परासम्बन्धेन, स्वावच्छिन्न

[टी॰]व्याप्यत्वात् ' केवलान्वयिन्यव्याप्त्यभिधानं द्वितीयलक्षणाभिप्रायेणे त्याहु, तच्चिन्त्यम् ।

---

निरूपितसमवायादिसम्बन्धेनेति यावत् । व्याप्यत्वा दिति । गुणाद्यन्य त्ववैशिष्ट्यावच्छिन्नाधिकरणताया गुणाद्यन्यत्वात् तादृशसम्बन्धेन तद्वै शिष्ट्यस्य द्रव्यमात्रवृत्तित्वादिति भाव । एवकारेण सत्ताया व्याप्यत्व व्यवच्छेद. । यत्र विशेषणविशेषावच्छिन्नसत्ताहेतुकद्रव्यत्वाद्यनुमितिरभि मता तत्र तद्वैशिष्ट्यहेतुकानुमितिरेवारोप्यते, वैशिष्ट्ये परम्परासम्बन्धेन व्याप्तिधीविरहेणानुमितिरसिद्धेवेति भाव ।

यद्यपि विशिष्टनिरूपितसम्बन्धस्य विलक्षणत्वे तादृशसम्बन्धेन सत्ताया अपि व्याप्यत्व निर्वहति, तथापि विशेषणावच्छिन्ननिरूपित समवायत्वादिना न सत्तादि सम्बन्धता,किन्तु "विशिष्टसत्तावा"निति प्रत्यये वैशिष्ट्यस्यैव सत्तादिविशेषणतापन्नस्योक्तपरम्परासम्बन्धेन धर्मिणि विशे- षणत्वोपगमात् नातिप्रसङ्ग इत्याशयेनेदमभिहितम् । नन्वेवरीत्या प्रथम लक्षणपरिष्कारे वक्ष्यमाणकेवलान्वयिसाध्यका व्याप्त्यसङ्गति, तत्रापि सम्ब न्धान्तरेण हेतुमद्वृत्तौ हेत्वधिकरणावच्छिन्नसाध्यसामानाधिकरण्याभाव प्रसि द्ध्या लक्षणगमनसम्भवात् अतआह— केवलान्वयिनी ति । द्वितीय लक्षणे ति । नच तद्वे त्यनेन उभयत्वावच्छिन्नस्यैव परामर्शात् प्रथम लक्षणेऽव्याप्त्यसम्भवे असङ्गतिर्दुर्वारैवेति वाच्यम्,केवलान्वयि साधकधूमेऽवा व्याप्तिप्रदर्शनात् तदुभयत्वेनोपस्थितप्रथमलक्षणे अव्याप्त्यसम्भवेपि लक्षणद्वये यथायोग तत्तत्स्थले अव्याप्त्यन्वये तात्पर्यात् । यद्यपि धूमादावपि साध्य सामानाधिकरण्यसामान्याभावघटितस्य प्रथमलक्षणार्थस्य ना व्याप्त्यवकाश, तथापि यत्किञ्चित्सा ध्यवद्वृत्तिकभेदनिवेशाभिप्रायेण द्वितीयलक्षणस्यैव य द्विरूपे साध्यसामानाधिकरण्याभावनिवेशाभिप्रायेणैव प्रथमलक्षणस्यापि न-

[दी] " सत्ताया गुणे न द्रव्यत्वसामानाधिकरण्य " मिति प्रतीतिर्हि " द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्य " मिति प्रतीतिवत् सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धेन,

---

नाव्यक्तिसाध्यके अव्याप्तिप्रदर्शनमविरुद्धम् । मूले च **यत्किंचित्साध्या नाधिकरणाधिकरण** इत्युपलक्षणम्, यत्किंचित्साध्याधिकरणावृत्तावित्यपि बोध्यम्, तेन प्रथमलक्षणाव्याप्तिसम्पादकहेत्वकथनान्न्यूनत्वस्य नावकाश इति ध्येयम् ।

सामानाधिकरण्यस्याऽव्याप्यवृत्तितायां प्रमाणसिद्धायामेव दर्शिताति व्याप्तिं वारयितुं शक्यते, तत्रैव न प्रमाणम्, उक्तप्रतीतेरन्यविषयकत्वादित्याह— **सत्ताया** मिति । **प्रतीतिर्हि** ति । **अभावं गुणे अवगाहत** इत्यनेनाऽन्वयः । **अवच्छेदकत्वस्ये** ति । निरूपकत्वस्येत्यर्थः, तेन सामानाधिकरण्यस्य व्याप्यवृत्तितामते तदवच्छेदकत्वस्याऽप्रामाणिकत्वेपि न क्षतिः । उक्ताकारप्रतीतावच्छेदकत्वानुल्लेखात् अवच्छेदकत्वाभावावगाहिता न सम्भवतीत्याशङ्क्याह— **परम्परे** ति । ननु उक्तपरम्परासम्बन्धो न वृत्तिनियामकः, 'आकाशं द्रव्यत्वसामानाधिकरण्यवत्' इत्यप्रत्ययादित्युक्तसम्बन्धावच्छिन्नाभावएवाऽप्रामाणिक इति तादृशाभावावलम्बनतापि नोक्तप्रतीते स्सम्भवतीत्याशङ्कोद्धारायाऽनुरूपं दृष्टान्तमाह— **द्रव्यत्व** इति । गुणस्यावच्छेदकतानियामकद्रव्यत्वसम्बन्धशून्यतया द्रव्यत्वनिष्ठाभावावच्छेदकत्वं न सम्भवतीत्यगत्या गुणनिष्ठो द्रव्यत्वपृथिवीत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धावच्छिन्नतादृशसामानाधिकरण्यस्य वा अभाव एव तादृशप्रतीतिविषय इत्यवश्यमुपेयम्, तद्वदनापीत्यर्थः ।

[दी] सामानाधिकरण्यस्यैवा ऽभावं गुणेऽवगाहते, न तु सत्तायामेव द्रव्यवृत्तित्वाभावम , ' सत्ता न द्रव्यवृत्तित्वाभाववती' ' द्रव्यवृत्तित्वाभावो वा न सत्तावृत्ति' रित्यादिसर्वजनप्रसिद्धप्रतीतिबाधितत्वात् ।

---

ननु यो यादृशशब्दाद्यादृशार्थः प्रतीयते तादृशशब्दोल्लिखित प्रत्यये तादृशार्थविषयकत्वमेवाऽस्ति बाधके युज्यत इत्याशयेन दर्शित प्रतीने स्वसत्तायां गुणावच्छिन्नद्रव्यवृत्तित्वाभावावगाहितायां बाधकप्रतीति माह— सत्ता न द्रव्यवृत्तित्वाभाववती ति । नच द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृत्तित्वस्वरूपस्य सत्ताया मस्मन्मतेपि सत्त्वा त्र तस्याः प्रतीने बाधकत्वं सम्भवति, विरोध्यविषयकत्वादिति वाच्यम् ; तादृश शब्देन द्रव्यवृत्तित्वाभावावच्छेदस्यैव प्रत्यायनात् , तदाकारप्रतीतेरपि तच्छेदावगाहितया बाधकत्वात् . भेदस्याव्याप्यवृत्तिताविरहेण सामानाधिकरण्याभाववच्छेदस्य तदभावविरोधित्वात् । यदि च भेदस्याव्याप्यवृत्तित्वमत मवलम्ब्य तादृशप्रतीते. विरोध्यविषयकत्व मुपपाद्यते ? तदा सत्ताया द्रव्यत्वसामानाधिकरण्याभावेपि तदधिकरणभिन्नत्वस्या ऽक्षत तया ऽतिव्याप्तिवारण मसमञ्जसमेवेति भावः ।

अव्याप्यवृत्तित्वसाधकदर्शितप्रतीते रभावरूपविशेष्ये सत्तावृत्तित्वा वगाहितया उपगमात् तादृशाभावविशेष्यकसत्तावृत्तित्वविरोधिविषयक प्रत्ययं बाधकतयोपन्यस्यति— द्रव्यवृत्तित्वाभाव इति । यद्यपि द्रव्य वृत्तित्वाभावे सत्तावृत्तित्वं गुणाद्यवच्छेदेन, न तु द्रव्यावच्छेदेनेति तद वच्छेदेन तत्र सत्तावृत्तित्वाभाव स्सम्भवति, एवं सत्तावृत्तित्वं सत्तात्वसा मानाधिकरण्यरूपम्, सामानाधिकरण्यस्याऽव्याप्यवृत्तितामते अव्याप्यवृत्तीति तदनवच्छेदकगुणत्वाद्यवच्छेदेन द्रव्यवृत्तित्वाभावे तदभाव स्सम्भवत्येवेति न विरोधः, तथाप्युक्तयुक्त्या दर्शितप्रतीते स्सत्तावृत्तित्वमेवावगाहितया

[दी] बाधकाभावात्तु संयोगतदभावयो रवच्छेदकभेदेन एकत्र प्रतीत्या तदुभयो रेकत्र सिद्धि । अतीन्द्रियसाध्यके अतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च । तत्र सामानाधिकरण्याभावस्य

---

बाधकत्व दुर्वारमेव । यत्तु, सत्तावृत्त्यभावे अवच्छेदकभेदेन सत्ता वृत्तित्वाभावसम्भवेऽपि अवच्छेदकाप्रतीतिदशायां जायमानतत्प्रत्ययस्य सत्ता वृत्तित्वग्रहप्रतिबन्धकतया तदुत्तर जायमानायां "सत्ताया गुणे न द्रव्यत्व सामानाधिकरण्य' मिति प्रतीते स्सामानाधिकरण्याभावे सत्तावृत्तित्वाभा वावगाहित्वासम्भवेन गुणनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यभावावगा हित्वे सर्वत्रैव तदवगाहित्वकल्पन मुचितमिति भाववर्णनम्, तद सत्, एवसति अवच्छेदकाविषयिण्या द्रव्यत्वसामानाधिकरण्यत्वेन सत्ताया तत्सामानाधिकरण्यविषयकप्रतीतेरपि बाधकतासम्भवेन "सत्ता न द्रव्य वृत्तित्वाभाववती" इत्यादिप्रतीतिपर्यन्ता ऽनुधावनस्य निर्बीजत्वापातात् ।

नन्वेव संयोगादिमति संयोगादेरप्यभावो मा सेत्सीत्, 'मूले न संयोग" इति प्रतीतेरपि मूलनिष्ठसंयोगाद्यवच्छेदकत्वाभावाऽवलम्बनतयोपपत्तेरि त्यत आह बाधकाभावा दिति । तत्र "कपिसंयोगाभावो वृक्षावृत्ति" इत्यादिप्रत्ययस्याऽननुभवादिति भाव । ननु संयोगाभावे वृक्षावृत्तित्वप्रत्यय इव द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वाभावप्रत्ययेऽपि विवादसम्भवात् यत्र सामानाधिकरण्याभावस्य न प्रत्यक्षसम्भव तत्र तत्सत्त्वे मानाभावेन तदनधिकरणत्व निष्प्रत्यूहमित्यतिव्याप्तिरित्याह—अतीन्द्रियसाध्यक इति। 'इद गुरु द्रव्यत्वात्" "पृथिवी गुरुत्वात्" इत्यादावित्यर्थ । अथवा स्तम्भादौ पिशाचत्वाभावस्येव स्तम्भत्वादौ पिशाचत्वसामानाधिकरण्या भावस्य, महति वायौ रूपाभावस्येव महावायुत्वादौ रूपसामानाधि करण्याभावस्यापि प्रत्यक्षत्वादुभयत्रातीन्द्रियत्वोपादानम् । तत्रे ति । गुरुत्वादिसाध्यकस्थले साध्यसामानाधिकरण्याभावस्या ऽतीन्द्रियप्रतियोगिक

[दी॰]प्रत्यक्षासम्भवेनासिद्धे । नच तदभाववद्वृत्तित्वेन तत्र तदनु मेयम् , तद्वद्वृत्तिभिन्नत्वस्योपाधित्वात् ।

किंच "इदमिदानी" मिति प्रतीतिनियामकविशेषणताविशेषेण

---

तया अतीन्द्रियहेतुकस्थले च धर्मिण एव तथात्वात् हेतौ साध्यसामानाधिकरण्याभावस्य प्रत्यक्षासम्भवेन तत्र तदसिद्धेरित्यर्थ । तदभाववद्वृत्तित्वेन— गुरुत्वाभाववद्वृत्तित्वेन । तत्र द्रव्यत्वादौ । तत्— गुरुत्वादिमद्वृत्तित्वाभाववत्त्वम् । अनुमेय मिति । तद्विरुद्धदृष्टान्तेने त्यादि । तद्वदि ति । गुरुत्वादिमदित्यर्थ । उपाधित्वा दिति । तद्वद्वृत्तिभिन्नत्वस्य तद्विरुद्धदृष्टान्ते साध्यव्यापकताया पक्षीभूते प्रकृतहेतौ च भेदस्य व्याप्यवृत्तित्वेन साधनाव्यापकताया स्सुग्रहत्वात् पक्षे साध्य सन्देहेन पक्षावृत्तितादृशोपाधौ सन्दिग्धोपाधेर्दुर्वारत्वात् अनुकूलतर्कविरहेण साध्यव्यापकतानिश्चयासम्भवेपि सन्दिग्धोपाधेरपि दूषकत्वादिति भाव ।

नन्वेवमतीन्द्रियसयोगादेरप्यव्याप्यवृत्तित्व न स्यात् , तद्वति तदभावप्रत्यक्षासम्भवेनाऽसिद्धे , अनुमानस्याप्रयोजकत्वात् । एव सामानाधिकरण्यस्याव्याप्यवृत्तितामाश्रित्य मणिकृतैव सिद्धान्तलक्षणे हेतुसमानाधिकरणाभावे प्रतियोगिसामानाधिकरण्याभावस्य विशेषणताकल्पे कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण इति ग्रन्थेन अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिव्याप्तिरुद्धृता, तथाच तन्मते युक्तिर्भवतु मा वा, उभयथापि तदाश्रित्य पूर्वपक्षलक्षण व्याचक्षाणो नाऽपराध्यतीत्याशङ्कय दूषणान्तरमाह— किंचे ति । इदानी मिति । कालिकविशेषणतात्मकविलक्षणसम्बन्धेनेत्यर्थ । अभावादौरहेति प्रतीतिनियामको यो दैशिकविशेषणताविशेष तत्र तादृशसम्बन्धवैलक्षण्यस्य प्रामाणिकतालाभाय विलक्षणप्रतीतिनियामकत्वाभिधानम् । नच इदानीमिति प्रतीतौ

[दी] हेतुतया सद्धेतावव्याप्ति, तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धे ।

---

सम्बन्धवैलक्षण्याभावेपि कालत्वेनाधिकरणतावगाहनात् इहेति प्रत्ययात् तस्य वैलक्षण्यमुपपद्यत इति किं सम्बन्धवैलक्षण्येनेति वाच्यम्, सम्बन्ध विशेषानुयोगित्वादन्यस्य कालत्वस्य दुर्वचत्वात्, 'इदानीं कालत्वा भाव' इत्यादिप्रतीत्या काले कालत्वाद्यभाववृत्ते प्रामाणिकत्वेपि 'काले कालत्व नास्ती' ति प्रतीत्यनुदयात् 'नास्ती' त्याकारकप्रतीतौ कालिकसम्ब न्धव्यापकतारूपावच्छिन्नाया एव विशेषणताया नियामकत्वस्यावश्यक त्वात् दैशिककालिकसम्बन्धसाधारणसम्बन्धतावच्छेदकस्याप्रामाणिकतया कालिकसम्बन्धे सम्बन्धावच्छेदकीभूतस्य वैलक्षण्यस्य सिद्धे र्निष्प्रत्यूहत्वाच्च। **सद्धेता विति** । कालत्वादिसाध्यकघटादिहेतावित्यर्थ । **काल इति** । कालावच्छेदेनेत्यर्थ । **अप्रसिद्धे रिति** । वृत्तिमत कालावच्छेदेन कालत्वादिसामानाधिकरण्यवत्त्वादवृत्तिनिष्ठतदभावस्य कालानवच्छिन्नत्वात् अवच्छेद्याधिकरणासम्बन्धिनोऽनवच्छेदकत्वात् ।

अथ हेत्वधिकरणमहाकालावच्छेदेन महाकाल एव कालवृत्तित्वा भाव प्रसिद्धयति, महाकालस्य गगनादिवदवृत्तितया तत्र कालवृत्तित्व स्याऽसत्त्वात, स्वस्य तादात्म्यसम्बन्धेन स्वसम्बन्धितया स्वनिष्ठा भावावच्छेदकत्वसम्भवाच्च । नच तादात्म्यसम्बन्धो नावच्छेदकतानि-यामक, 'रूपे पर्वते न वह्निमत्संयुक्तत्व" मितिवत् "रूपे स्वस्मिन् न वह्निमत्संयुक्तत्व" मिति प्रतीते स्सविवादत्वात इति वाच्यम्, तथा सति तादात्म्यसम्बन्धेन व्यभिचारिणि तदतिरिक्तसम्बन्धेन स्वासम्ब-न्धिनि हेतौ तेन सम्बन्धेन हेतुमत्त्वावच्छेदेन साध्यसामानाधिकरण्याभाव वत्त्वविरहादतिव्याप्ते स्फुटतया तद्दोषापेक्षाया अनुचितत्वापातादिति चेत्,

अत्र केचित् ;—कालिकसम्बन्धेन गगनादेरपि वृत्तिमत्त्वमिति मता भिप्रायकोऽयं ग्रन्थ, तथाच कालावच्छेदेन महाकालेऽपि कालिकसम्बन्धेन साध्यवद्वृत्तित्वसत्त्वात् तद्विरहिणोऽप्रसिद्धिर्न निरस्यत इति वदन्ति।

वस्तुतस्तु, स्वस्मिन सामानाधिकरण्यतदभावयो पृथगवच्छेदकत्वे स्वाधिकरणत्वमेव नियामकम्, न तु स्वसम्बन्धितामात्रम्, स्वाधिकरणावच्छेदेनैव स्वास्मिन् सत्ताप्रतीते रनुभवसिद्धत्वात्, अत एव सम्बन्धान्तरेण सम्बन्धिनोऽप्युपेक्ष्य वर्तमान इत्यभिहितम् । नचैव तादात्म्यादि वृत्त्यनियामकसम्बन्धेन व्यभिचारिण्यतिव्याप्तचकथनात् न्यूनता दुर्वारैवेति वाच्यम्; तादृशसम्बन्धेन साध्यवद्वृत्तित्वस्य हेत्वधिकरणत्वस्यचा ऽप्रसिद्ध्याऽतिव्याप्त्यसम्भवात् । नच तेन सम्बन्धेन सद्धेतौ लक्षणसङ्गमनाय वृत्तेरधिकरणतायाश्च स्थाने सम्बन्धप्रतियोगित्वानुयोगित्वयोरेव निवेशनीयतया ऽतिव्याप्ति रावश्यकेति वाच्यम्, प्राचा मते तेन सम्बन्धेन व्याप्त्यनभ्युपगमसम्भवेन वृत्त्यादेरपि निवेशसम्भव इत्यभिप्रायेणैवातिव्याप्त्यनुद्भावनात् ।

एतेन हेत्वधिकरणखण्डकालविशेषावच्छेदेन कालिकसम्बन्धेन तद्वृत्तौ तद्विषयकज्ञानएव साध्यासामानाधिकरण्यप्रसिद्धिसम्भवति, नचैवमपि "कालत्ववान् सर्वस्मा" दित्यादा खण्डकालस्य हेत्वनधिकरणतया हेत्वधिकरणावच्छिन्नसाध्यासामानाधिकरण्याप्रसिद्धि र्दुर्वारैवेति वाच्यम्, हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणत्वपर्यन्तानिवेशेन वैशिष्ट्य व्याप्यवृत्तिधर्मावच्छिन्नस्य यत्र हेतुत्व तत्र तादृशधर्मस्यैतन्मते स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेन हेतुत्वस्य अभिमततया उक्तस्थले सर्वत्वस्यैव तादृशसम्बन्धेन हेतुतया तादृशसम्बन्धेन अवृत्तौ कालिकसम्बन्धेन कालवृत्तौ गगनत्वादावेव तादृशसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणकालावच्छेदेन प्रसिद्धेरिति परास्तम्, तादृशकाले तज्ज्ञानस्य विषयतासम्बन्धसत्त्वेऽपि तादृशसम्बन्धस्य वृत्ति

नियामकत्वानभ्युपगमेन तज्ज्ञानस्य तत्कालीनताविरहेण च तस्य तज्ज्ञानानधिकरणत्वात् तज्ज्ञाने अभाववृत्तौ तत्कालस्यानवच्छेदकत्वात् ।

महाकालानुयोगिकविशेषणताविशेषेण घटादिहेतुकस्थलाभिप्रायकोय ग्रन्थ, तादृशसम्बन्धेन हेतुमत्ताया खण्डकालेऽभावान्नोक्तदिशाऽप्रसिद्धि इत्यपि केचित् ।

अत्र स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदकतादृशसम्बन्धावच्छिन्नस्वाधिकरणतावत्सामान्यकत्वं विवक्षणीयमिति नोक्ताव्याप्त्यवकाशः, स्वावयवपरमाण्वाद्यवच्छेदेन घटादौ वर्तमाने कालत्वादिसामानाधिकरण्याभावे तदधिकरणकालसामान्यस्यानवच्छेदकतया तत्र लक्षणसमन्वयसम्भवात् केवलान्वयिसाध्यके मेयत्वादौ सर्वाधिकरणावच्छेदेनैव हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वसत्त्वात् तन्निष्ठतदभावाप्रसिद्ध्या ऽव्याप्ति र्न क्षति मावहति, मूलकृतैव तत्राव्याप्तेर्वक्ष्यमाणत्वात् । यदि च "आत्मभिन्न ज्ञानवदन्यत्वा" दित्यादौ हेतोरात्मान्यसकलवस्त्ववच्छेदेनैव दैशिकविशेषणतया साध्यवद्वृत्तित्वसत्त्वात् आत्मनश्च केनापि सम्बन्धेन हेतुमत्त्वाभावात् तदवच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववृत्त्यसम्भावात् हेतुनिष्ठतादृशाभावाऽप्रसिद्ध्या अव्याप्तिरिति विभाव्यते, तदा हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणतदवच्छेदेन स्वस्मिन् वर्तते योऽभाव तत्प्रतियोगितानवच्छेदकतादृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वत्वकत्वं व्याप्ति रित्येव विवक्षणीयम्, "कालत्ववान् घटात्" इत्यादौ कालावच्छेदेन घटादौ वर्तमानकपालसमवेतत्वाद्यभाव एव प्रसिद्ध, तत्प्रतियोगितानवच्छेदकं च कालिकसम्बन्धावच्छिन्नकालवृत्तित्वत्वादिकमिति लक्षणसमन्वय । हेतुमति हेतुताच्छेदकसम्बन्धेन यद्वृत्तिमत् तन्निष्ठतत्सम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावानवच्छेदक तत्सम्बन्धावच्छिन्नतद्वस्तुप्रकृतहेतूभयाधिकरणतावत्सामान्यकत्वं वा वक्तव्यम्, 'आत्मभिन्न ज्ञानवदन्यत्वा" दित्यादौ आत्मा

धवच्छेदेन घटत्वाभावादिनिष्ठसामान्यवृत्तित्वाभावस्यानवच्छेदकं घटत्वाभावज्ञानवदन्यत्वोभयाधिकरणतावत्सामान्यमिति लक्षणसमन्वयः । उभयाधिकरणत्वनिवेशात् " वह्निमान् धूमा " दित्यादौ धूमादिसंयोगिनः कपालादेर्घटादिनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वेपि न क्षतिः, कपालादे स्संयोगेन घटानधिकरणतया उक्तोभयाधिकरणतावत्सामान्यानन्तर्गतत्वात् ।

अथवा हेतुतावच्छेदकसम्बन्धेन यद्धेत्वधिकरणं तदवच्छिन्नस्ववृत्तिकान्यहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावकत्वविवक्षणात् न कश्चिद्दोषः; सर्वत्र सद्धेतावन्ततः अवृत्तौ प्रसिद्धे साध्यसामानाधिकरण्याभाव एव तादृशस्ववृत्तिकान्यत्वसत्त्वेन लक्षणसमन्वयात्. वह्न्यादिनिष्ठधूमादिसामानाधिकरण्याभावे अयोगोळकादेरिव तद्वृत्तित्वस्याप्यवच्छेदकत्वात्, स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्त्यनवच्छिन्न हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यसामानाधिकरण्याभावकत्वं वा विवक्षणीयमित्यादयः परिष्कारस्य पन्थानो द्रष्टव्याः ॥

## इति गादाधर्यां सार्वभौमपरिष्कारः।